॥ श्रीः ॥

॥ श्रीमते रामानुजाय नमः ॥

# आत्ममीमांसा

क्षीराम्भो निधिरत्नमण्डपमहासौवर्णसिंहासनं
वामाङ्के स्थितया प्रसन्नवदनं श्रीकान्तया लिङ्गितम् ॥
दोर्दण्डाङ्कितशङ्खपङ्कजगदाचक्रायुधैराश्रितं
त्वामर्थं कलयामि जन्मविमुखो लक्ष्मीशनारायणम् ॥१॥

श्रीमद्यतीन्द्रचरणौ युगलौ मनोज्ञौ
कञ्जोपमौ सुखप्रदौ मृदुलौ च नत्वा ।
अद्वैतवादिकरिकुम्भदृढं प्रभेत्तु—
मातन्यते कृतिवरा खलु वक्ष्यमाणा ॥२॥

मार्यीभराजकरपात्र्युपनामधेय
आनन्दको हरिहराख्य सरस्वती सः ।
स्वे मार्क्सवादकृतिमध्यगते हि रुद्रे
च्छेदे स्वकीयमदता परिचिह्नरूपम् ॥३॥

चक्रे श्रीभाष्य आक्षेपं तद्विनाशनहेतवे ।
कुर्वेऽहमात्ममीमांसां श्रीवैष्णवमुदावहाम् ॥४॥

## ॥ अथ महासिद्धान्तश्लोकाः ॥

"अहमर्थो न चेदात्मा प्रत्यक्त्वं नाऽऽत्मनो भवेत् ।
अहं बुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते ॥१॥

निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् ।
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥२॥

अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥३॥

मयि नष्टेऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता ।
इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥४॥

स्वसम्बन्धितया ह्यस्यास्सत्ता विज्ञप्तितादि च ।
स्वसम्बन्धवियोगे तु ज्ञप्तिरेव न सिद्ध्यति ॥५॥

छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत् ।
अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥६॥

"विज्ञातारमरे केन" "जानात्येवे" ति च श्रुतिः ।
"एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ" इति च स्मृतिः ॥७॥

"नात्मा श्रुते" रित्यारभ्य सूत्रकारोऽपि वक्ष्यति ।
"ज्ञोऽतएवे" त्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम् ॥८॥"
(श्रीभाष्य० अध्या० १ पा० १ सू० १ अधिक० १ श्लो० १—८)

अथात आत्ममीमांसा। "अत सातत्यगमने" इति धातोः "सातिभ्यां मनिन्मनिणौ ॥" (उणादि० पाद० ४) इत्युणादिसूत्रेण मनिण् प्रत्यये निष्पन्न आत्मशब्दो नानार्थः॥ "आत्मा पुंसि स्वभावे स्यात्प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि ॥" "आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि। यत्नेऽर्केऽग्नौ मतौ वातौ ॥" इति हि कोशः। तत्र "क्षेत्रज्ञ आत्मा पुरुषः ॥" (अमर० कां० १ वर्ग० ४ श्लोक २९) इत्यमरे गृहीतनामा क्षेत्रज्ञपुरुष पदबोध्य आत्मा विचार्यते॥ तरति शोकमात्मवित् ॥ (छान्दोग्योप० प्रपाठ० ७ खण्ड १ श्रु० ३) इति श्रुत्या आत्मज्ञानस्यापवर्ग-साधनत्वं सिद्धेरात्मा अवश्यं विचार्यः सिध्यति॥

तत्र विप्रतिपत्तिः किमहमर्थं आत्मा ? उतचिन्मात्रमिति ? "तत्राद्वैतवेदान्तिन आहुः "अहं जानामि" इत्यादौ ज्ञा धात्वर्थत्वेन यज्ज्ञानं भाति, तत् स्वपर निर्वाहक न्यायेन परप्रकाशकत्वात् स्वयं प्रकाशम्, तत् परेण प्रकाश्यं स्वयमेव प्रकाशशीलम्। अनुभूतिः स्वयं प्रकाशा अनुभूतित्वात्, यन्नैवं तन्नैवं, यथा घटः। अनुभूते रनुभाव्यत्वे घटादिवदन-

नुभूतित्वप्रसङ्ग इत्यनुमानेन तर्कानुगृहीतेनानुभूतेस्तत् स्वयं प्रकाशत्वं सिध्यति। साऽनुभूति नित्या स्वेन परेण च दुर्ग्रह-त्वेन प्रागभावादेरसिद्धेः। यत्र संविद उत्पत्ति विनाशादिकं प्रतीयते, तत् अन्तःकरणवृत्तिगतोत्पत्ति विनाशादेस्तस्यामारोपात्, न तु स्वत इति विभावनीयम्। इयं संविन्निर्विकारा "अनुभूति निर्विकारा अनुत्पन्नत्वात् यदुक्तसाध्यं न भवति तदुक्तसाधनमपि न भवति यथा घटादिः" इत्यनुमानेन तत्सिद्धेः। सानुभूतिरेका "अनुभूति नं नाना अजत्वात् यन्नाना तज्जायते यथा घटः" इत्युनुमानेन तत् सिद्धेः। दृश्यमानः संविद्भेदो विषयाश्रयभेदोपाधिको न स्वाभाविकः। सानुभूति निर्विशेषा "अनुभूति निर्विशेषा अनुभूतित्वात् यत् सविशेषं न तदनुभूति यथा घटः" अनुभूतेः सविशेषत्वे घटादिवदननु-भूतित्वप्रसङ्ग इति तर्कानुगृहीतेनानुमानेन तत्सिद्धेः। इयमनु-भूतिरेवात्मा "संविदात्मा अजडत्वात् यदुक्तसाध्यं न भवति तदुक्तसाधनमपि न भवति यथा घटः" इत्यनुमानेन तत्सिद्धिः। अहमर्थो नात्मा सुषुप्तिमोक्षयोरननुवर्तमानत्वात्। मोक्षे च तदनुवृत्तौ अज्ञत्वादिप्रसङ्गश्च। अतश्चैतन्यमात्रमात्मा। तत्र प्रत्यगर्थे आत्मनि चैतन्ये संसारावस्थायां रज्जौ सर्पभ्रमवत् निरुपाधिकोऽहं भ्रमो भवति, स्फटिके लौहित्य भ्रमवत् सोपाधिकः कर्तृत्वादि भ्रमः प्रवर्तते।

किं च ज्ञातृत्वादिप्रकाशो भ्रान्तिः देहात्माभिमानवत् एव जायमानत्वात्—स्थूलोऽहमित्यादि प्रतीतिवत् अतः सिद्धं ज्ञातृत्वेन भासमानोऽहमर्थो नात्मा किं तु संविदेवात्मेति॥"

अत एवाद्वैतवेदान्तविद्भिरभिधीयते—

"याऽनुभूतिरजाऽमेयाऽनन्तात्माऽऽनन्दविग्रहा ।
महदादि जगन्मायाचित्रभित्तिंनमामि ताम् ॥ इति ॥
परागर्थप्रमेयेषु या फलत्वेन संमता ।
संवित् सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥
अप्रामाण्यप्रसक्तिश्च स्यादितोऽन्यार्थकल्पने ।
वेदान्तानामतस्तस्मान्नान्यमर्थं प्रकल्पयेत् ॥ इति च" ॥

अतो निधूंत निखिल भेद विकल्प निर्धर्म प्रकाश मात्रैकरसा कूटस्थ नित्या संविदेवात्मा परमात्मा च । तज्ज्ञान मपवर्ग-हेतुरिति ॥

अत्रेत्थं विशिष्टाद्वैतवेदान्तिन आशेरते अहमर्थ एवात्मा स स्वस्मै स्वयं प्रकाशो ज्ञाता च, स सुषुप्तिमुक्त्योरप्यन्वेति । तस्य धर्मभूतं नित्यं किञ्चिज्ज्ञानमस्ति, यत् संसारावस्थायां कर्मणा संकोचविकासभाक् मुक्तौ प्रतिबन्धक कर्मापगमेन काष्ठाप्राप्तविकासोपेतं सर्वमत्यन्ताकूलतया विषयी कुर्वद्विभु संपद्यते । इदं धर्मभूतज्ञानं विकासावस्थायां विषयान् प्रकाश यन् स्वं च स्वाश्रयायाहमर्थाय प्रकाशयति, न तु संकोचाव-स्थायाम् । इदं विषय प्रकाशनवेलायामेव स्वाश्रयं प्रत्येव स्वयं प्रकाशम् , न तु सर्वदा न वा सर्वान् प्रति । अन्यकालिकमाश्र-यान्तरगतं च ज्ञानं स्मरणानुमित्यादि ज्ञानगोचरः । ज्ञानान्तरापेक्षानियमं विना व्यवहारानुगुणत्वमेवास्य स्वयं

प्रकाशत्वम् । इदं पराप्रकाश्यमिति न, किंतु कदाचित् परेणापि ज्ञानेन प्रकाश्यते । इदं विषयप्रकाशकं स्वपरनिर्वाहक न्यायेन विषयप्रकाशनवेलायां स्वाश्रयाय स्वयं प्रकाशं विकास संकोचाद्यवस्थाविशिष्टवेषेणोत्पत्ति विनाश शीलं प्रत्यात्मभिन्नं प्रत्यक्षत्व परोक्षत्व सुखदुःखाद्यनवधिक विकारवत् सधर्मकमात्मनो धर्मभूतं च । इदं ज्ञानमनुभूत्यादिपदव्यपदेश्यं नात्मा भवितुमर्हति अन्यस्मै धर्मिणोऽहमर्थाय भासमानत्वात् तद्धर्मत्वाच्च । किंतु ज्ञानस्यापि धर्मिभूतः स्वस्मै स्वयं प्रकाशमानोऽहमर्थ एवात्मा । अयं सुषुप्ति मुक्त्योरप्यन्वेति । अयं देहेन्द्रियमनः प्राणधीभ्योऽन्यो नित्यःप्रतिशरीरं भिन्नोऽणुश्च संसारदशायां तिरोहितस्वरूपः स्वं प्रति आधारस्य नियन्तुः शेषिणो नित्याविभूतस्वरूपस्य निर्दोषस्य सर्वकल्याणगुणाकरस्य जगज्जन्मादिकारणस्य विभोः सर्वान्तर्यामिणः परमात्मन उपासनेन तं प्रीणयन् प्रीतेन तेन संसारान्मुक्तोऽर्चिरादिमार्गेण दिव्यं धाम नीतस्तत्प्रसादादाविभूतस्वरूपो ज्ञानानन्दविषये तेन परमं साम्यं प्रापितस्तदनुभवकैङ्कर्यधन्यो भवति ततोऽयं नावर्तत इति ॥

तदेवमुभयेषां वादिनां परस्पर विरुद्ध सिद्धान्त श्रवणेन विप्रतिपत्तौ उदितायां तेषां वादकथामालम्ब्य परीक्षणे प्रवर्तामहे ॥

## ॥ अथानुभूतेः स्वयं प्रकाशत्वविषये विचारः ॥

अद्वैतिनः—लोके घटमहं जानामि, घटोमयाऽनुभूयते,

इत्यादौ याऽनुभूति र्घटादिकं प्रकाशयन्ती लक्ष्यते, सा अनुभूतिः स्वस्वरूपं स्वयमेव प्रकाशयति। परनिर्वाहकस्य स्वनिर्वाहकत्वं न्याय्यम्। लोके घटादौ चाक्षुषत्वादिधर्मस्य चाक्षुषत्वादिव्यवहारस्य च यो रूपादिर्हेतुः स स्वस्मिन् चाक्षुषत्वादिधर्मस्य चाक्षुषत्वादिव्यवहारस्य च जनने न रूपान्तरमपेक्षते, स्वयमेव स्वस्मिन् चाक्षुषत्वादिधर्मस्य तद्व्यवहारस्य च जनने हेतु र्भवति, तथैव घटादौ प्रकाशाख्यधर्मस्य घटादिः प्रकाशते इति व्यवहारस्य च हेतुभूतं ज्ञानं स्वस्मिन् प्रकाशधर्मस्य तद्व्यवहारस्य वा जनने न ज्ञानान्तरमपेक्षते, किं तु स्वयमेव तत्र हेतु र्भवति। एवमनुभूतेः स्वयं प्रकाशत्वं सिध्यति। अनुभूतिरन्येन केनापि न प्रकाश्यते, स्वयमेवात्मानं प्रकाशयति, इदमेवानुभूतेः स्वयं प्रकाशत्वं नाम। परेणाप्रकाशमानत्वे सति स्वयं प्रकाशमानत्वमनुभूतेः स्वभावः। अत्र "अनुभूतिः स्वयं प्रकाशा अनुभूतित्वात् यन्नैवं तन्नैवं यथा घटः" अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्ग इति तर्कानुगृहीतमनुमानमप्यत्र प्रमाणमिति॥

विशिष्टाद्वैतिनः—ज्ञानं ज्ञातारमहमर्थमात्मानं प्रति विषयप्रकाशनवेलायां स्वयं प्रकाशते, न तु सर्वान् प्रति न वा सर्वदा ज्ञानं स्वयं प्रकाशते। स्वगतमतीतं ज्ञानं स्मरणेन प्रकाशते, परगतमनुमानादिना गृह्यते। एतदनुरूप एव लोकानुभवः। स्वगत परगतज्ञानानां ज्ञानान्तरेण प्रकाशदर्शनात् ज्ञानान्तराप्रकाश्यत्वं न मन्तुं युक्तम्, किं तु विषयप्रकाशन-

वेलायां स्वयं प्रकाशमानत्वात् सजातीयज्ञानान्तरापेक्षा नियम-राहित्येन प्रकाशमानत्वरूपं स्वयं प्रकाशत्वमेव मन्तुं युक्तम् । परावेद्यत्वसंवलितं स्वयं प्रकाशत्वमनुभवविरुद्धम् । अनुभूते र्ज्ञानान्तराविषयत्वे "अनुभूतिः स्वयं प्रकाशा अनुभूतित्वात्" इति शब्दादिज्ञानविषयत्वमपि न स्यादिति स्वव्याघातः प्रसज्यते ।

किं च अनुमानेऽस्मिन् स्वप्रकाशेति साध्यवाचकपदेन किमनुभूते र्विषये स्वव्यवहारे स्वाश्रयस्य कदाचित् स्वगोचरा-नुभूत्यन्तर नैरपेक्ष्यमात्रं साध्यते ? उत सर्वदा सर्वस्य स्वगोचरानुभूतिविरहः ? नाद्यः सिद्धसाधनात्, यतो वयमपि विषयप्रकाशनवेलायामनुभूते र्ज्ञानान्तरकर्मतां विनैव स्वाश्रयाय प्रकाशमङ्गीकुर्महे । न द्वितीयः प्रत्यक्षविरोधात्, यतः परगतं ज्ञानं हानोपादानादि लिङ्गकेनानुमानेन ज्ञायते, स्वगत मतीतं ज्ञानमपि "अज्ञासिषम्" इति स्मरणात्मकेन ज्ञानेन प्रकाश्यते ।

किं च, अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्ग-तर्कोऽपि न युक्तः पूर्वोक्तानुमानप्रयोगस्थाऽनुभूतिशब्देनानुभूते-रनुभाव्यत्वस्य सिद्ध्याऽननुभूतित्वं हि प्रसज्येत ।

किं च, घटः स्वयं प्रकाशो घटत्वात् घटस्यानुभाव्यत्वे पटवदघटत्वप्रसङ्ग इत्यपि प्रयोक्तुं शक्यत्वात् पूर्वोक्तानुमानतर्कौ आभाससमान योगक्षेमतां नातिवर्तेते । अथोच्येत—घटोऽनु-भूयते पटोऽनुभूयत इति अनुभूतिविषयतयैव घटादिः प्रकाशते इति,—तर्हि परगता स्वगता च संवित् अतीतानागतकालयो

ज्ञानान्तर विषयतयैव भातीति समानमेतत्।

किं च, यदि परगताऽनुभूतिरन्येन न ज्ञायेत, तर्हि शब्दार्थयोः सम्बन्धः कथं गृह्येत। परबुद्धिमनुमाय हि शब्दार्थयोः संबन्धो लोके गृह्यते। परगतानुभूतेरननुभाव्यत्वे चेष्टाशब्दयोः प्रमाणकोटे र्बहिर्भाव एव फलेत्। अन्योन्याशयानभिज्ञतया वादिनोर्वादः शुष्ककलह एव पर्यवस्येत्। परस्पराभिप्रायज्ञानमूलक एव सर्वो लौकिको व्यवहारः प्रवर्तते, पशुप्रभृतीनां पराभिप्रायं ज्ञात्वैव भयादिकमप्युत्पद्यते। आचार्यस्य ज्ञानक्त्वमनुमायैव शिष्येणोपसत्तिः क्रियते, तथा शिष्यस्य वचन मनुसृत्याचार्येण शिष्यस्यान्यथा ज्ञानादिकमनुमीयते, तस्मै तत्त्वं चोपदिश्यते। इदं सर्वं परगतज्ञानस्यावेद्यत्वे न संघटते। तदेवमनुभूतेरन्यस्य कस्याप्यवेद्यत्वे प्रतिज्ञायमाने स्वव्याघातादिदोषा पातात् सा प्रतिज्ञा साधनाङ्गं न भवतीति सिद्धम्।

किं च, घटादे रननुभूतित्व मनुभूतिलक्षण विरहप्रयुक्तं न स्वनुभाव्यत्वप्रयुक्तम्। अनुभूते रननुभूतित्वं चानुभूतिलक्षणविरहे एव युज्यते नान्यथा। अनुभाव्यत्वमात्रेण तदापादनं न युक्तम्। अनभाव्येऽपि परानुभवादौ स्वसत्तयैव स्वविषय भासकत्वस्य स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वरूपस्य वानुभूतिलक्षणस्य सत्त्वात् तत्रानुभाव्यत्वमात्रेणाननुभूतित्वं नापादयितुं शक्यते। घटादौ निरुक्तस्यानुभूतिलक्षणस्याभावादेवाननुभूतित्वं सिध्यति नानुभाव्यत्वात्।

किं च, अनुभूतेरनुभाव्यत्वेऽननुभूतित्वप्रसङ्ग इति योऽयमनिष्टप्रसङ्ग उक्तः सोऽननुभाव्यत्वेऽपि आपादयितुं शक्यते इति प्रतितर्केण पराहतो भवति। प्रतितर्कश्चेत्थम्—यद्यनुभूतिरननुभाव्या स्यात् तर्हि गगनकुसुमवदननुभूतिः स्यादिति। अथोच्येत—गगनकुसुमेऽननुभूतित्वं तुच्छत्वप्रयुक्तं, नत्वननुभाव्यत्वप्रयुक्तमिति, तन्न, यतः साध्यसमव्याप्त्यभावेन तस्योपाधित्वं न युज्यते। न हि भवता अनुभूतिव्यतिरिक्तेषु घटादिषु तुच्छत्वं स्वीक्रियते।

किं च, अनुभूतेरननुभाव्यत्वे स्वीक्रियमाणे आगमबाधश्च भवति। अद्वैतिभिर्ब्रह्मानुभूतिरूपं स्वीक्रियते, यद्यनुभूतिरूपं ब्रह्म न वेद्यं तर्हि तत्त्वप्रतिपादनपरस्य शास्त्रस्य को नु विषयः स्यात्? यद्युच्येत प्रपञ्चमिथ्यात्वमात्रं विषय इति, तर्हि अथातो ब्रह्मजिज्ञासा॥ (ब्रह्मसू० अ० १ पा० १ सू० १) आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः॥ (बृह० उ० अ० २ ब्रा० ४ श्रु० ५) ब्रह्मविदाप्नोति परम्॥ (तैत्तिरीयो० वल्ली० २ अनुवा० १ श्रु० १) अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः॥ (तै० व० २ अनु० ६ श्रु० २) पृथगात्मानं प्रेरितारंचमत्वा जुष्टस्ततस्तेनामृतत्वमेति॥ (श्वेताश्व० उ० अ० १ श्रु० ६) इत्यादिवचनानि अनुभूतिब्रह्मणो वेद्यत्वपराणि निरर्थकानि स्युः॥

अद्वैतिनः—यद्यनुभूतिरूपस्य ब्रह्मणो वेद्यत्वं स्वीक्रियेत, तर्हि ब्रह्मणोऽवेद्यत्वप्रतिपादकानां "यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ (केनो० ख० २ श्रु० ३) विज्ञातारमरे केन विजानीयात् ॥ (बृह० उ० अ० २ ब्रा० ४ श्रु० १४) येनेदं सर्वं विजानाति तं केन विजानीयात् ॥ (बृह० उ० अ० २ ब्रा० ४ श्रु० १४) यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥ (तैत्ति० उ० व० २ अनु० ४ श्रु० १) न शब्दगोचरो यस्य योगिध्येयं परं पदम् ॥" इत्यादीनां वचनानां कथं निर्वाहः? तत्र स्वरसप्रतीतमवेद्यत्वं स्वीकुर्वतामस्माकं मते सुखेन निर्वाहः। भवतां मते कथम्?

विशिष्टाद्वैतिनः— तत्र 'यस्यामतम्' इति श्रुतौ मतत्व विज्ञातत्वादिकमपि स्वरसतः प्रतीयत एव। अमताविज्ञातादि-शब्दैरपि ब्रह्मस्वरूपस्य प्रतिपादनात् मतत्वादिकमेव फलतीति स्वरसतो निर्वाहो भवतां मते न संभवति। तत्र परस्परविरुद्धयोः मतत्वामतत्वयोः प्रतिपाद्यमानयो राकारभेदेनैव व्यवस्था कार्या। सा चेत्थम्—तत्तद्वाक्यप्रतिपादित गुण विभूत्यादि विशिष्टाकारेण ब्रह्मणो मतत्वम्, ब्रह्मणि वस्त्वन्तरस्वभावानामसत्त्वात् वस्त्वन्तरग्राहक प्रमाण ग्राह्यत्वस्याभावात् अवच्छिन्न विषयत्वस्यासत्वाच्च वस्त्वन्तरगतस्वभाव विशिष्ट-

वेषेण वस्त्वन्तर ग्राहक प्रमाण ग्राह्यत्ववेषेण अवच्छिन्नविषयत्ववेषेण चामतत्वं संभवतीत्युभयं समन्वेति। विज्ञातारमरे केन विजानीयात् ॥ (बृ० २।४।१४) इत्यस्य ब्रह्मणः कृच्छ्रे ण ज्ञातव्यत्वस्य बाह्यार्थ ग्राहक चक्षुराद्यग्राह्यत्वस्य वा प्रतिपादने तात्पर्यम्। येनेदं सर्वं विजानाति तं केन विजानीयात् ॥ (बृ० २।४।१४) इत्यस्यापि पूर्वोक्तार्थे एव तात्पर्यम्। अथवा मत्तः स्मृति र्ज्ञानमपोहनं च ॥ (गी० अ० १५ श्लो० १५) इति श्रीमद्भगवद्गीतोक्तप्रकारेण यस्य भगवतः प्रसादेनेदं सर्वं जीवो विजानाति, तं परमात्मानं तत्प्रसादं विना केनान्येनोपायेन विजानीयात् इति प्रतिपादने तस्य वचनस्य तात्पर्यम्। यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥(तैत्ति० २।४।१) इत्यस्य वचनस्य ब्रह्मानन्दस्य वाङ्मनसापरिच्छेद्यत्वप्रतिपादने तात्पर्यम्, न त्वत्यन्तावेद्यत्वप्रतिपादने। तथा सति यच्छब्दादिभिस्तत्प्रतिपादनं न युज्येत. आनन्दं ब्रह्मणो विद्वान् ॥ (तैत्ति० उ० व० २ अनु० ४ श्रु० १) इत्यग्रे तद्विषयकवेदनं चोच्यमानं न संगच्छेत। "न शब्द गोचरो यस्य" इत्यस्य वचनस्य निकृष्ट परिशुद्धजीवात्मस्वरूपस्य देवादिशब्दागोचरत्व प्रतिपादने तात्पर्यम्। अतो न शब्दप्रमाणेनापि ब्रह्मस्वरूपत्वेनाभ्युपेताया अनुभूतेरवेद्यत्वं सिध्यति। अतः सिद्धम् अनुभूतेः पराप्रकाश्यत्वे सति स्वयं प्रकाशमानत्वरूपा स्वतः सिद्धिरप्रमाणा, किं तु आत्मान्तरापेक्षानियमरहितप्रका-

वत्वरूपा स्वतः सिद्धिरेव प्रामाणिकी। इयं ज्ञानान्तरविषयत्वेऽपि युज्यत इति ॥

## ॥ अथानुभूते र्नित्यत्वानित्यत्वविषये विचारः ॥

विशिष्टाद्वैतिनः— अद्वैतिनोऽनुभूतं र्नित्यत्वं सिद्धान्तयन्तस्तस्या उत्पत्ति विनाशौ खण्डयन्ति। तत्रोच्यते किमद्वैतिभिः घटादिप्रकाशात्मकत्वेन सर्वलोकविदिता या अनुभूतेरुत्पत्ति विनाशौ प्रतिपिध्येते ? उत सकल विषयविरक्ताया निराश्रयायाः कस्याश्चिदन्यस्या अनुभूतेरुत्पत्ति विनाशौ प्रतिपिध्येते ? न प्रथमः, घटादि विषयक प्रत्यक्षज्ञानात्मिकाया लोकप्रसिद्धायाः संविदो नित्यत्वे घटादीनामपि नित्यत्वं प्रसज्येत। प्रत्यक्षसंविदो वर्तमानग्राहित्वेन तस्याः सदा सत्त्वे विषयेण घटादिनापि सदा सता भाव्यम्। घटाद्युत्पत्तेः प्राक् तद्विषया प्रत्यक्ष संवित् नास्माकं संभवति। घटादिपदार्थ विषयक संविदो नित्यत्वे एकस्या एव संविदः सर्वविषयकत्वे चास्माकमपि सदा सर्वज्ञत्वं स्यात्। अद्वैतिभिः संविद एकत्वं तस्याः सर्वविषयत्वं नित्यत्वं च स्वीक्रियते, तथा सति अस्माकं सदा सर्वज्ञत्व मवश्यं प्रसज्येतैव। यद्युच्येत— संवित् पूर्वं स्वरूपेण वर्तते, पश्चात् सामग्रीवैचित्र्यात् तत्तद्घटादिविषया संपद्यत इति, तन्न, संविदि सत्यांसामग्र्या अपेक्षा किमर्था। सामग्र्यैव तत्तद्घटादिविषयीकरणात्मक संबन्धः सिध्यति, तदर्थं पूर्वं स्थितायामपि सामग्र्यपेक्षा।

भवतीति यद्यभिप्रेयेत, तदपि न, संवित् स्वरूपातिरिक्त संबन्ध कल्पने प्रमाणाभावात्। संवित्स्वरूपमेव तत्तत्पदार्थविषयीकरण स्वभावम्, तस्मिन् सति विषयी करणं स्वत एव सिध्यतीति सामग्र्यपेक्षा न संभवति। किं च, अद्वैतमते एका नित्या विभ्वी संवित् तत्तदध्यासाधिष्ठानतया भासमाना स्वीक्रियते, एवं विधायां संविदि संबन्धार्थं सामग्र्यपेक्षा न युज्यते। न हि संविदि अनध्यस्तो घटादिरूपः पदार्थोऽद्वैतिमते स्वीक्रियते, तथा स्वीकारे संवित्संबन्धार्थं सामग्र्यपेक्षा युज्येतापि। अतो घटादिविषय प्रकाशात्मिकायाः संविदो नित्यत्वे प्रकाश्यघटादेरपि नित्यत्वं स्यादेव ॥

अद्वैतिनः— ननु प्रागभावरहितायाः संविदः कथमुत्पत्तिः संभाव्यते? ग्राहकप्रमाणाभावात् संवित्प्रागभावासिद्धिः। तथाहि नानुभूत्या स्वप्रागभावो ग्रहीतुं शक्यते, स्वप्रागभावस्थितिकाले अनुभूत्या अनुत्पन्नत्वात् ग्राहकाभावात् प्रागभावग्रहो न संभवति, संविद उत्पन्नतादशायां प्रागभावस्य नष्टत्वात् विषयाभावादेव प्रागभावग्रहोऽसंभवी। अनुभूत्यन्तरेण संवित्प्रागभावग्रहोऽप्यसंभवी, निष्प्रतियोगिकस्य प्रागभावस्य दुर्ग्रहत्वात् प्रतियोगिभूतायाः संविदश्च स्वतः सिद्धत्वेन संविदन्तरविषयत्वस्याभावात् तत्प्रागभावोऽनुभूत्यन्तरेण ग्रहीतुं न शक्यते। ततश्चानुभूतिप्रागभावस्य दुर्ग्रहत्वेन तस्याः प्रागभावासिद्धे स्तस्या उत्पत्तिः कथं स्वीकर्तुं युज्यते ॥

विशिष्टाद्वैतिनः—स्वतः परतश्च संवित्प्रागभावो ग्रहीतुं शक्यते। अस्ति तावल्लोकस्य प्रतीतिः "एतावन्तं कालं न किञ्चिदहमज्ञासिषम्" इति। इयं प्रतीतिः सामान्यतः संविदभावं गृह्णाना पूर्वकालिकं स्वप्रागभावमपि गृह्णाति। अस्मदादि प्रत्यक्षव्यतिरिक्तेषु ज्ञानेषु त्रिकालवर्तिनामर्थानां ग्रहणस्य संप्रतिपन्नत्वात् अतीतोऽपि प्रागभावस्तस्या ग्रहीतुं शक्यते। अतीतस्यापि स्वकाले सत्त्वेन तात्कालिकत्वेन तस्य ग्रहणे नाप्रामाण्यं प्रसज्यते। यथा वर्तमानस्य पूर्वोत्तरकालयो रसत्त्वेऽपि तस्य वर्तमानत्वेन ग्राहकं ज्ञानं यथावस्थिताकारेण ग्रहणात् अप्रमाणं न भवति, तथा अतीतस्याप्यतीतत्वेन ग्राहकं ज्ञानमपि अप्रमाणं न भवति। प्रत्यक्षान्तर्गततया पृथक् प्रमाण-भूतयापि वा योग्यानुपलब्ध्या घटाद्यभाववत् संविदभावोऽपि सुग्रहः। एवं स्वतः संवित्प्रागभावः सुग्रह इत्युपपादितम्। संविदो ज्ञानान्तर वेद्यत्वस्य स्वयं प्रकाशत्व निरूपणावसरे समर्थितत्वात् ज्ञानान्तरेणापि संवित्प्रागभावः सुग्रहः।

किं च, अद्वैतवाद्यपि प्रतिवादिनां शिष्याणां च स्वसिद्धान्तार्थज्ञानमनुत्पन्नं मत्वैव वाक्यं प्रयुङ्क्ते, स्वयमपि गुरूपदिष्टं प्रतिवाद्युक्तं वा अजानानः न ज्ञायते इति ब्रूते, जिज्ञासते च। लोके मूर्खपण्डित व्यवहारोऽपि प्रवर्तते। इदं सर्वं संवित्प्रागभावग्रहं गमयति। संवित्प्रागभावस्यासत्त्वे ज्ञानादिविधिशास्त्रं न संगच्छेत। अत इदं दुरपलपम्, यत् स्वगतो भविष्यदनुभूतिप्रागभावः स्वेन योग्यानुपलब्धा गृह्यते,

अतीतः संवित्प्रागभावः स्मरणानुमानादिना गृह्यते, परगतः संवित्प्रागभावोऽनुमानादिना गृह्यते इति। अतः स्वतः परतश्च संवित्प्रागभावः सिद्ध इति संविद उत्पत्ति रुपपद्यते ॥

अद्वैतिनः— विशिष्टाद्वैतिभिरपि धर्मभूतज्ञानस्य नित्यत्वं स्वीक्रियते। तैः संविद् उत्पत्त्यादिसमर्थने क्रियमाणे अपसिद्धान्त आपतति। अतः संविदोऽनुत्पत्त्यादिकमेव तैरप्याश्रयणीयम् ॥

विशिष्टाद्वैतिनः— विशिष्टाद्वैतिनां मते धर्मभूतज्ञानं सधर्मकम्। तस्मिन् विविधा अवस्थाविशेषाः संभवन्ति. तत्तदवस्था संपत्त्यर्थं सामग्रीसमागमोऽप्युपपद्यते। धर्मभूत-ज्ञानस्य स्वरूपतो नित्यत्वं स्वीक्रियते, नत्ववस्थाविशिष्टवेषेण नित्यत्वम्। तथा च तत्तद्विषय प्रकाशात्मकेषुधर्मभूतज्ञानस्या-वस्थाविशेषेषु प्रागभावोत्पत्त्यादिबुद्धिर्युक्तैव, न सोपलम्भ-विरुद्धा, अतो नापसिद्धान्त दोषस्य प्रसक्तिः ॥

अद्वैतिनः— अनुभूते रजत्वात् तस्या अवस्थान्तरा-पत्तिरेव न संभवति। विशिष्टाद्वैतिभिरजाया अनुभूतेरवस्था-न्तरापत्तिः कथं स्वीक्रियते ?

विशिष्टाद्वैतिनः— यदि अजत्वशब्देन स्वरूपानुत्पत्ति-र्विवक्ष्यते, तर्हि अद्वैतिभिः स्वरूपतोऽनुत्पन्नत्वेन स्वीकृताया अविद्याया स्तथा अस्माभिस्तथा स्वीकृतायाः प्रकृतेश्च यथा विविधा अवस्था भवन्ति, तथैव स्वरूपतो नित्यत्वेन स्वीकृतस्य

धर्मभूतज्ञानस्य विविधावस्थायोगेऽपि न विरोधः। विविधावस्थायोगित्वेन स्वीकृतायामविद्यायां स्वरूपोऽनुत्पन्नत्वरूपहेतोः सत्त्वात् व्यभिचारः। यदि अजत्व शब्देन अवस्थान्तरापत्तिराहित्यमेव विवक्षितम्, तर्हितेनैव तत् साध्यत इति साध्याविशेषदोषः।

किं च, अनुभूतिविनाशस्यापि प्रामाणिकत्वं स्वीकार्यम्, अनुभूते विनाशाभावे उत्तरकालेऽपि प्रत्यक्षसंविदां सद्भाव प्रसङ्गात् घटादिविनाशकालेऽपि घटादीनां सद्भावः प्रसज्येतेति घटादीनामपि नित्यत्वं स्यात्। तथा चास्मदादीनां सदा सर्वज्ञत्वं प्रसज्येत। संविदामविनाशित्वे मम ज्ञानं नष्टम् इति प्रत्यक्षबाधश्च प्रसज्यते।

किं च, यदि घटादिविषयकं ज्ञानं न विनश्येत्, तर्हि सुषुप्त्यादिकं नोपपद्येत, अद्वैतिसंमतो मोक्षोऽपि नोपपद्येत, मोक्षकालेऽपिघटादिविषयक संवित्सद्भावप्रसङ्गात्॥

अद्वैतिनः— ननु संवित्स्वरूपस्य विशिष्टाद्वैतिनां मते नित्यत्वात् तस्य कथं विनाशः उपपद्यते? नित्यस्य विनाशाभावो हि युज्यते॥

विशिष्टाद्वैतिनः— यथा प्रकृतेः स्वरूपतो नित्यत्वेऽपि घटत्वाद्यवस्थाविशिष्टवेषेण तस्यामुत्पत्तिविनाशौ संभवतः तथा संविदः स्वरूपतो नित्यत्वेऽपि तत्तदवस्थाविशिष्टवेषेण उत्पत्तिविनाशौ युज्येते इति यत् किञ्चिदेतत्॥

अद्वैतिनः— नास्माभि र्घटादिविषय प्रकाशात्मिकायाः संविद उत्पत्ति र्निषिध्यते, किंतु सकल विषय विरक्तायाः कस्याश्चिदन्यस्या एव संविद उत्पत्तिर्निषिध्यते। अतो न दोषः॥

विशिष्टाद्वैतिनः— यद्यप्यस्माभि रस्माभि रहमर्थः स्वयं प्रकाशत्वाज् ज्ञानस्वरूपस्तथा धर्मभूतज्ञानमद्वारीकृत्य विषयाग्राहकत्वात् निर्विषयश्च स्वीक्रियते। तदहमर्थरूपं ज्ञानं स्वतो निर्विषयं भवितुमर्हति, इदं चोपलम्भानुगुणम्। तादृशाहमर्थविलक्षणा निर्विषया संवित् अद्वैतिभिः स्वीक्रियते, सा नास्त्येव योग्यानुपलब्धेः। यदि सा निर्विषया संवित् मोक्षकाले समस्तीत्युच्येत, तर्हि न "सर्वं ह पश्यः पश्यति॥ (छा० उ० प्रपा० ७ ख० २६ श्रु० २) इति श्रुत्या मोक्षे सर्वं विषयक संविद एव सद्भावावगतेः। स्वापमदमूर्च्छाद्यवस्थासु निर्विषया संविदुपलभ्यते इति तु वाङ्मात्रम्, वस्तुतस्तत्रापि निर्विषय संविदुपलम्भो नास्त्येव। अस्माभिः स्वापमदमूर्च्छासु स्वरूपमात्रप्रकाशात्मकस्य अहमर्थस्य प्रकाशः स्वीक्रियते, सोऽहमर्थो घटादिविषयग्राहक संविदो विलक्षणस्तद्धर्मित्वात्। अद्वैतिभिः सोऽहमर्थः संविद्विलक्षणोऽहंकारग्रन्थिः स्वीक्रियते, तस्य स्वापादिषु प्रकाशो नाङ्गीक्रियते, किं तु निर्विषयायाः संविदः प्रकाशः स्वीक्रियते। तथा भूता निर्विषया संविदनुपलम्भनिरस्ता। अहमर्थव्यतिरिक्ता संवित् निर्विषया न भवति,

न चकास्ति च। यद्यपि अहमर्थधर्मभूता संवित् स्वापाद्यवस्थासु निर्विषयावर्तते, परं तु सा सा तासु अवस्थासु न चकास्ति, यस्य च स्वरूपमात्रप्रकाशात्मकस्याहमर्थस्य स्वापाद्यवस्थासु प्रकाशो भवति, सोऽपि न निर्विशेषः, किं तु प्रत्यक्त्वैकत्वानुकूलत्वविशेषविशिष्ट एव, तादृशं विशेषविशिष्टतयैव स स्वापाद्यवस्थासु स्वयं प्रकाशते, न तु निर्विशेषतया। निर्विशेषप्रकाशः क्वचिदपि कदापि न भवति। अतः सोऽभ्युपगमंनार्हति। सुषुप्त्यादिषु आत्म धर्मभूता संवित् निर्विषया वर्तते, परं तु सा न निर्विशेषा, किन्तु साश्रयत्वादि विशेषवत्येव। तस्या निर्विषयायाः संविदः स्वापादिषु प्रकाशो न भवति। विषयप्रकाशनवेलायामेवात्मधर्मभूताया स्तस्याः प्रकाशो भवति। अतः प्रत्यक्षादि समस्तप्रमाणबाधितत्वात् प्रतिकूलतर्कपराहतत्वाच्च "अनुभूतिरनुत्पन्ना अनुभूतित्वात्" इत्यनुमातुं न शक्यते।

किं च, अस्मिन् अनुमाने सर्वदा विषयोल्लेखरहिताया अनुभूते र्यदि पक्षीकरणम् तर्हि आश्रयासिद्धिः, तथाविधसंविदोऽभावात्। कादाचित्क विषयोल्लेखराहित्य विशिष्टाया अनुभूतेः पक्षीकरणे सिद्धसाधनम्, अस्माभिः स्वापादिषु विषयोल्लेखरहितत्वेन स्वीकृताया आत्मधर्मभूतायाः संविदः स्वरूपतो नित्यत्वस्य स्वीकृतत्वात्। आत्मधर्मभूतायाः संविदस्तत्तदवस्था विशिष्टवेषेणानित्यत्वात् नित्यत्वं दुःसाधम्, अहमर्थव्यतिरिक्तायाः सर्वदा विषयोल्लेखवर्जितायाः संविदोऽसत्त्वादेव तस्याः नित्यत्वं दुःसाधमिति सिद्धम् ॥

## ॥ अथ संविद्विषये निर्विकारत्व सविकारत्व-विचारः ॥

अद्वैतिनः— "अनुभूति निर्विकारा अनुत्पन्नत्वात्, यन्नैवं तन्नैवं यथा घटः।" अनेनानुमानेन संविदो निर्विकारत्वं सिध्यति ॥

विशिष्टाद्वैतिनः— घटादिप्रकाशात्मिकाया एव संविद उपलभ्यमानत्वात् तस्याश्चोत्पत्तिविनाशयोः पूर्वं समर्थितत्वात् तस्यां निर्विकारत्वरूपसाध्यस्याभावात् बाधः, तथा अनुत्पन्नत्वरूपहेतोरभावात् असिद्धिश्चास्मिन्ननुमाने दोषौ भवतः।

किं च, अत्र निर्विकार पदेन किं विवक्षितम्, किमुत्तरावधिराहित्यं विवक्षितम्? उत नामान्तरभजनार्हावस्थाविशेषराहित्यम्? उतावस्थासामान्यराहित्यम्? न प्रथमः, विनाशित्वेन उत्तरावधिमति प्रागभावे अनुत्पन्नत्व हेतोः सत्त्वाद् व्यभिचारात्, भावरूपाज्ञाने विनाशित्वेन उत्तरावधिमति अनुत्पन्नत्वरूपहेतोः सत्त्वात् व्यभिचाराच्च। न द्वितीयः, महदादिनामान्तरभजनार्हविकारवत्त्वेनाद्वैतिभिः स्वीकृतायामविद्यायामनुत्पन्नत्वहेतोः सत्त्वाद् व्यभिचारात्। अनुभूतित्व स्मृतित्व प्रत्यक्षत्वादीनां नामान्तरभजनार्हावस्थानां संविदि प्रत्यक्षसिद्धत्वाद्धेतो र्बाधितत्वाच्च। न तृतीयः, द्वितीयपक्षोक्तदोषापातात्। मिथ्याभूतानामवस्थानां संविदि अद्वैतिभिः स्वीकृतत्वादपसिद्धान्तश्च प्रसज्यते ॥

अद्वैतिनः— संविदि विकाराणां मिथ्यात्वमेवास्माकं-सिषाधयिषितम् ॥

विशिष्टाद्वैतिनः— तथा सतीदं केवलव्यतिरेकिसाधनं भज्येत, न हि घटादिषु सत्यविकारयोगित्वमुत्पत्तिव्याप्यं दृष्टम्, घटादिगतविकाराणामपि मिथ्यात्वात्। यदि घटादिगत-विकाराणां व्यावहारिकसत्यत्वं लोकसिद्ध मित्युच्येत, तर्हि संविद्यपि व्यावहारिक विकारा लोकसिद्धा इति तदभावो दुर्वचः।

अद्वैतिनः— विशिष्टाद्वैतिनामपि मते ब्रह्मानुत्पन्नं निर्विकारं च स्वीक्रियते। तमेवार्थं वयं समर्थयामः। अस्य खण्डनं कथं तैः कर्तुं युज्यते ?

विशिष्टाद्वैतिनः— वयं लोकानुभवसिद्धामुत्पत्तिविना-शादि विविधविकारसंभृता मद्दमर्थस्यात्मनो धर्मभूतां संविदं परं ब्रह्मेति न स्वीकुर्मः। तामेव सकलविषयाश्रयशून्यावस्थया-ऽवस्थितामभिमत्य तथाविधां परं ब्रह्मेति ब्रूमः। किं नु जीवात्म तद्धर्मभूतज्ञान व्यतिरिक्तं समस्त चिदचिद्विशिष्टं स्वविशेषण-भूतचेतनाचेतनप्रतिष्ठितविविधविकारं स्वतो निर्विकारं नित्य-विकसितसार्वज्ञ्यादिगुणगणशेवधिमीश्वरतत्त्वं परं ब्रह्मेति स्वीकुर्मः। तस्य निर्विकारत्वं साध्यते चेत् इष्टापत्तिः। परं तु तत्र तदव्ययं तद्भूतयोनिं परिपश्यन्ति धीराः ॥ (मुण्डको० मु० १ ख० १ श्रु० ६) इति श्रुतिरेव प्रमाणं न त्विदमनुमानम्।

अतो लोके विषयप्रकाशकत्वेन सिद्धायाः तत एवाद्वैतिभिः स्वयं प्रकाशत्वेन साधितायाः संविदो विविधविकारवत्त्वात् निर्विकारत्वं न सिध्यतीतिसिद्धम् ॥

## ॥ अथानुभूतेरेकत्वनानात्वविचारः ॥

अद्वैतिनः— "अनुभूति र्न नाना अजत्वात् यन्नैवं तन्नैवं यथा घटः" इति व्यतिरेकिणा संविदिनानात्वाभावः फलति, योऽयं संविद्भेदो दृश्यते, स विषयाश्रयादिभेदोपाधिकः, न तु स्वाभाविकः ॥

विशिष्टाद्वैतिनः— अत्र "अनुभूति र्न नानेति" किं यतः कुतश्चिदपि भेदो नास्तीत्युच्यते ? अथवा संविज्जातीयमात्रात् भेदः संविदि नास्तीत्युच्यते ? यद्वा संवित्स्वरूपाद्भेदः संविदि नास्तीति साध्यते ? अथवा संविदन्तराद्भेदः संविदि नास्तीति साध्यते? न प्रथमः, संविदि घटपटादिप्रतियोगिकभेदः सर्वस्य प्रत्यक्षसिद्धः। अतः संविन् यतः कुतश्चिदपि न भिन्नेति साधने प्रत्यक्षविरोधः प्रसज्यते। यदि संविन् यतः कुतश्चिदपि न भिद्येत, तर्हि अद्वैतिनां देहात्मविवेक एव नोपपद्येत। संविदि ज्ञेय ज्ञातृ प्रतियोगिक भेदस्याद्वैतिसंमतत्त्वात् अपसिद्धान्तश्च प्रसज्येत। न द्वितीयः, सिद्धसाधनात् संविदं संविद्विजातीयामभ्युपगच्छन्तं प्रति हि संविदि संविज्जातीयमात्रप्रतियोगिकोभेदोनिषेद्धुं युज्यते, वयं संविदं संविद्विजातीयांनाभ्युपेम इति अस्मान् प्रति सिद्धसाधनं तदनुमानम्।

न तृतीयः, सिद्धसाधनात् संविदि संवित्स्वरूपप्रतियोगिकभेदस्यास्माभिरनभ्युपगमात्। न चतुर्थः, संविदि संविदन्तर प्रतियोगिकभेदो निषेद्धुं शक्यते, संविदन्तरे सिद्धे तत्प्रतियोगिकभेदस्यापि सिद्ध्यवश्यं भावात् स भेदो निषेद्धुं न शक्यते, संविदन्तरे असिद्धे तु तत्प्रतियोगिकभेदो दुर्वचत्वात् निषेद्धुं न शक्यते।

किं च, यदि सर्वासां संविदामैक्यं स्यात्, तर्हि घटादि प्रति नियत विषयायां संविदि संविदन्तरविषयाणामपि प्रकाशः प्रसज्यते, सर्वा अपि संविदः अन्ततस्स्वरूपाभेदं प्राप्ता इति एकस्यां संविदि सर्वसंविद्विषय भानं दुर्वारमेव। परं तु तथा लोके नोपलभ्यते। लोके इदं दृष्टमिदमदृष्टमिति व्यवस्था अनुभूयते, इयं व्यवस्था तदैव युज्यते, यदि संविदः परस्परं स्वरूपतो भिन्नाः स्युः। परस्पर मसंस्पृष्टविषयाणामनेकासां संविदां सत्वे एव इयं व्यवस्था घटेत। यथा परस्परास्पृष्टविषयाश्चोदनक्रियाः परस्परं भिद्यन्ते, तथा परस्परास्पृष्टविषयाः संविदोऽपि परस्परं भिन्ना इति सिध्यति॥

अद्वैतिनः— आत्मनिष्ठं धर्मभूतज्ञानं नित्यमिति विशिष्टाद्वैतिभिः स्वीक्रियते। अतस्तैस्संविद्भेदस्य विषयोपाधिकत्वमेवागत्या स्वीकार्यमापतति। तैः संविद्भेदस्य विषयभेदोपाधिकत्वं कथमिव खण्ड्येत?॥

विशिष्टाद्वैतिनः— वयमात्मनिष्ठं धर्मभूतज्ञानं नित्यमेकं च स्वीकुर्मः, तथा तस्य तत्तत्कर्मानुरूपं संकोच विकासं-

चावस्था विशेषं स्वीकुर्मः। कर्मानुगुण तत्तद्विषयीकरणात्मक विकारविशेषरूप विकासापेक्षया ज्ञानस्य स्वरूपत एव क्रियाभेदःप्रति नियत तत्तद्विषयता च विशिष्टाद्वैतिभिः स्वीक्रियते। परं तु अद्वैतिभिस्तथा नाभ्युपगम्यते, ते नित्य निर्विकारस्वरूपमात्र प्रकाशरूपां संविदं स्वीकुर्वन्ति। अत स्तन्मतानुरोधेन सर्वासां संविदामेकत्वात् एकस्यां संविदि अन्यसंविद्विषयाणां भानप्रसङ्गो दुर्वार एव। संविदां प्रति नियत विषयकत्वदर्शनेन संविदां भेद एव सिध्यति॥

## ॥ अथानुभूतेः सविशेषत्व निर्विशेषत्वविचारः॥

अद्वैतिनः— "अनुभूति निर्विशेषा अनुभूतित्वात्, यन्नैवं तन्नैवं यथा घटः"। अनुभूतेः सविशेषत्वे घटादिवदननुभूतित्वप्रसङ्गः। भेदादयोनानुभूतिधर्माः दृश्यत्वात् धर्मत्वात् रूपादिवत्, इत्यनुमानेन भेदादीनामनुभूतिधर्मत्वाभावसिद्ध्या अनुभूते निर्धर्मकरूपं निर्विशेषत्वंसिध्यति॥

विशिष्टाद्वैतिनः— प्रथमानुमाने निर्विशेषपदेन विवक्षितः समस्तविशेषाभावः किमनुभूतिस्वरूपमेव? उत तद्व्यतिरिक्तं किञ्चित्? पूर्वत्र पुनरुक्ति सिद्धसाधने प्रसज्येते। उत्तरत्र समस्तविशेषाभावरूप विशेषवत्त्वमनुभूतौ सिध्यति पक्षे साध्यधर्मान्वयस्यावश्यं स्वीकार्यत्वात्। यदुच्येत प्रमाणबलात् अयं निर्विशेषत्वरूप एको विशेषोऽनुभूतौ स्वीक्रियते इति, तन्न, अस्मिन् अनुमाने विमन्यमानं प्रति इदमनुमानं

प्रमाणत्वेन पुरस्कर्तुं न युक्तमिति, प्रमाणबलादित्यनेन श्रुत्यादिकमेव विवक्षणीयम्, श्रुत्यादीनां निर्विशेषतत्त्वप्रतिपादकत्वाभावः साधयिष्यते। अतः श्रुत्यादिकमप्यत्र प्रमाणपदेन ग्रहीतुं न शक्यते इति प्रमाणबलादयमेको विशेषः स्वीक्रियत इति रिक्तं वचः।

किं च, अभावरूपस्यास्य एकस्य धर्मस्याङ्गीकारे भावरूपेषु विशेषेषु कुतो द्वेषः। यद्युच्येत प्रमाणाभावादन्ये भावरूपा विशेषा नाङ्गीक्रियन्त इति, नित्यत्व स्वयं प्रकाशत्वादिरूपाणां भावरूपाणां धर्माणां प्रामाणिकत्वस्याद्वैतिभिः स्वीकृतत्वात् भावरूपेषु धर्मेषु द्वेषः कर्तुं न युज्यते। यदि तेषां नित्यत्वादि विशेषाणां व्यावहारिकप्रमाणसिद्धत्वान्मिथ्यात्वं, तर्हि निर्विशेषत्वस्यापि व्यावहारिकप्रमाणसिद्धत्वान्मिथ्यात्वमेव स्यात्। इष्टापत्तौ अनित्यत्वसविशेषत्वादिक मवर्जनीयं स्यात्। भेदादिधर्मपक्षीकारेण यदनुमानमुक्तम्, तत्र स्वाभ्युपगतानां नित्यत्व स्वयं प्रकाशत्वैकत्वादीनां धर्माणां पक्षीकरणे अपसिद्धान्तः स्यात्। तेषां पक्षकोटे र्बहिर्भावे विवक्षिते तानवलम्ब्य व्यभिचार आपद्यते, तेषु अनुभूतिधर्मत्वाभावरूपं साध्यं नास्ति, धर्मत्वदृश्यत्वरूपहेतुरस्ति। यद्युच्येत नित्यत्वादीनां मिथ्यात्वेनाभ्युपगमान्नापसिद्धान्तः न वा अनैकान्त्यमिति, तर्हि नित्यत्वादि प्रतिक्षेपकान् सौगतादीन् प्रति अद्वैतिनां तत्समर्थन प्रयासो व्यर्थः स्यात्। तेषामनुभूतिस्वरूपमात्रत्वे अनुभूतिस्वरूपमङ्गीकुर्वद्भिः सौगतादिभिः सह

वैमत्यं न कार्यम् ।

किं च, "अनुभूतिः सविशेषा भासमानत्वात् घटवत्" नित्यत्वादयोऽनुभूतिधर्माः अभ्युपगतानुभूतिस्वरूपं वादिनं प्रति तद्धर्मतया प्रमाणेन साध्यमानत्वात्, यत्र यत् प्रमाणतः साध्यते स तद्धर्मः संप्रतिपन्नवत्" इत्यनुमानाभ्यामनुभूतेः सधर्मकत्वरूपं सविशेषत्वं सिध्यति ॥

## ॥ अथ संविद आत्मत्वानात्मत्वविचारः ॥

अद्वैतिनः— "संविदात्मा अजडत्वात् यन्नैवं तन्नैवं यथा घटः" इत्यनुमानेन संविद आत्मत्वं सिध्यति ॥

विशिष्टाद्वैतिनः— अत्र किं नाम अजडत्वम् ? यदि स्वसत्ताप्रयुक्तप्रकाशवत्त्वमजडत्वम्, तर्हि तत् दीपादिष्व-नैकान्तिकम्, आत्मत्वरूपसाध्याभाववति दीपादौ स्वसत्ता-प्रकाशवत्त्वरूपहेतोः सत्त्वात् । यदि अव्यभिचरित प्रकाश-सत्ताकत्व मजडत्वम्, तर्हि तस्य सुखादौ व्यभिचारः, तस्यानात्मत्वात् सत्ताकाले सर्वस्मिन् प्रकाशमानत्वाच्च । सजातीय निरपेक्षप्रकाशत्वरूप मजडत्वमपि दीपादिभि र्घटादि-भिश्च व्यभिचरितम् । यद्युच्येत सर्वथा सजातीय निरपेक्ष-प्रकाशत्वमजडत्वं स्वीक्रियते, घटादीनां द्रव्यत्वादिना सजातीय प्रकाश सापेक्ष प्रकाशवत्त्वान्न व्यभिचार इति. तर्हि संविदोऽपि हेतु मत्त्वमसिद्धम्, यतः सा आत्मसम्बन्धसापेक्षप्रकाशावर्तते । यदि तस्याः प्रकाशे आत्मसम्बन्धस्यापेक्षा न स्यात्, तर्हि

स्वाश्रयव्यतिरिक्तेभ्योऽपि सा प्रकाशेत। यदि स्वस्मै भासमानत्वमजडत्वम्, तर्हि तत् संविद्यसिद्धम्, संविदः परस्मै अहमर्थाय प्रकाशमानत्वात्। यदि अजडत्वं ज्ञानत्व-रूपम्, तर्हि ज्ञानरूपा सा संवित् किं स्वस्मै प्रकाशते उत परस्मै प्रकाशते। सा यदि परस्मै भासत इति स्वीक्रियते तर्हि घटादिवदनात्मा स्यात् परस्मै प्रकाशमानं घटादिकं हि अनात्मेति प्रसिद्धम्। संविदः परस्मै अहमर्थाय प्रकाशमान-त्वादनात्मत्वं दुर्वारत्वम्। स्वस्मै प्रकाशमानत्वं च तस्यामसिद्ध मिति पूर्वमुक्तमेव। अतः स्वस्मै प्रकाशमानत्वरूपस्याजडत्व-स्यैवात्मत्व साधकत्वात् तस्य चाहमर्थे एव सत्त्वात् अहमर्थ एवात्मेति सिध्यति।

किं च, इह साध्यमान मात्मत्वं कीदृशमिति विमृशामः। किमिदम् आत्मत्वं ज्ञातृत्वादिकम्? उत प्रत्येतुः प्रत्येतव्याद-व्यतिरिक्तत्वम्? अथवा स्वस्मै भासमानत्वम्? उत अव्य-भिचरितप्रकाशसत्ताकत्वम? यद्वा स्वप्रकाशत्वम् अथवा स्वाभिन्नत्वम्? नाद्यः संविदि ज्ञातृत्वस्य प्रत्यक्षविरुद्धत्वात्। ज्ञातृत्वं हि ज्ञानाश्रयत्वम्। न च ज्ञानस्य ज्ञानाश्रयत्वं संभवति, आश्रयाश्रयिभावस्य भेदगर्भत्वात्। नापि ज्ञाने ज्ञानान्तराश्रयत्वं वक्तुं शक्यम्, ज्ञानाधिकरणकज्ञानस्य योग्यानुपलम्भ-निराकृतत्वात्।

किं च, किं क्षणिकत्वेन लोकानुभवसिद्धस्य ज्ञानस्य ज्ञातृत्वं साध्यते? उत स्थिरत्वेनाभ्युपगतस्य ज्ञानस्य? न

प्रथमः, क्षणिकवादिनां बौद्धादीनां विषये उच्यमाना प्रतिसन्धानाद्यनुपपत्तिरत्रापि प्रसज्येत। न द्वितीयः, स्थिरत्वेनाभ्युपगतस्य ज्ञानस्य ज्ञातृत्वे साध्यमाने किं निराश्रयस्य ज्ञानस्य ज्ञातृत्वं साध्यते? उत साश्रयस्य? नाद्यः, आत्मा स्थिरज्ञानरूपोऽहमर्थः, स्वीक्रियते, तस्य ज्ञातृत्वसाधने इष्टापत्तिः। यदि अहमर्थं व्यतिरिक्तं स्थिरं निराश्रयं ज्ञानान्तरं स्वीकृत्य तस्य ज्ञातृत्वं साध्येत, तर्हि तथा विध ज्ञानान्तरस्याप्रामाणिकत्वात् आश्रयासिद्धिः, सर्वाभ्युपगताया अहमर्थभूतायाः संविदो निराश्रयत्वे विवक्षिते प्रत्यक्षादिविरोधः, तस्याः साश्रयत्वेनैव सिद्धेः। यदि साश्रयस्यैव स्थिरस्य ज्ञानस्य ज्ञातृत्वं साध्येत, तर्हि ज्ञातृद्वयोपलम्भः प्रसज्येत। न द्वितीयः, प्रथमकल्पोक्तदोषाणामत्रापि प्रसङ्गात्। न तृतीयः, स्वस्मै भासमानत्वरूपमात्मत्वं संविदि प्रत्यक्षविरुद्धम्, संविदोऽपि परस्मै अहमर्थायैव भासमानत्वात्। स्वस्मै इत्यनेन प्रकाश फलित्वं बोध्यते, प्रकाशफलित्वं च प्रकाशाधीनव्यवहारादिमत्त्वम्, इदमहमर्थं एव वर्तते, न तु ज्ञाने, अहमर्थस्यैव तत्तद्व्यवहारभाक्त्वात्। ज्ञानमात्रस्य व्यवहारादिकर्तृत्वमद्वैतिमतेऽपि न स्वीक्रियते। यदि चतुर्थकल्पोक्तरीत्या अव्यभिचरितप्रकाशत्वसत्ताकत्वमात्मत्वमभिसन्धाय तत् साध्येत, तर्हि सिद्धसाधनं दोषः। अस्माभिरपि अव्यभिचरितप्रकाशसत्ताकत्वस्य संविदि स्वीकारात्। तावन्मात्रेणात्मत्वस्वीकारे सुखादीनामप्यात्मत्वं प्रसज्यते, तेषामप्यव्यभिचरितप्रकाशसत्ताकत्वात्। यदि

स्वप्रकाशत्वं स्वाभिन्नत्वं चात्मत्वमभिसन्धाय साध्येत, तर्हि सिद्धसाधनदोषः, अस्माभिः संविदि स्वप्रकाशत्वस्य स्वाभिन्नत्वस्य च स्वीकारात्। यदि पूर्वोक्तानुमानेन इतरवादिभिरात्मत्वेन संप्रतिपन्नस्याहमर्थस्याभेदः संविदि साध्यते, तर्हि व्याघातादिदोषाः प्रसज्यन्ते। यदि अनुभूतेर्यथा कथंचिदात्मशब्दवाच्यत्वं साध्यते, तर्हि सिद्धसाधनं दोषः॥

अद्वैतिनः— ननु 'आत्मा ज्ञानम् आत्मत्वात्' इत्यनेन आत्मनो ज्ञानतादात्म्यं साध्यते, अतो नोक्तदोषः॥

विशिष्टाद्वैतिनः— अहमर्थ आत्मा धर्मितया तद्धर्मभूतं च ज्ञान महं जानामीत्यनुभूयते। तत्र धर्मिण आत्मनो यदि धर्मे तादात्म्यं साध्येत, तर्हि व्याघातः, धर्मधर्मिणोर्भेदावश्यंभावात्। यदि धर्मिणोऽहमर्थस्यात्मनो ज्ञानरूपत्वं साध्येत, तर्हि सिद्धसाधनम्, यतोऽस्माभि स्तस्य स्वप्रकाशरूपत्वेन ज्ञानत्वं स्वीक्रियते॥

अद्वैतिनः— विशिष्टाद्वैतिभि र्ज्ञानरूपो धर्मी अहमर्थः, तस्य धर्मभूतमेकं ज्ञानम्, एतयोः स्वरूपभेदः, तत्र धर्मभूतज्ञानस्य विषयोल्लेखरूपोऽवस्थाविशेषश्च स्वीक्रियते, अत्र कल्पनागौरवम् तदपेक्षया कल्पनालाघवात् आत्मशब्दवाच्यस्यैव पदार्थस्य विषयोल्लेखरूपाऽवस्था स्वीकर्तुमुचिता। विशिष्टाद्वैतिभि र्गुरुभूतोऽर्थः किमर्थं स्वीक्रियते।

विशिष्टाद्वैतिनः— आत्मशब्दवाच्यस्यार्थस्य विषयोल्लेखरूपावस्थास्वीकारे तथा विधावस्थैव ज्ञानम्, तदाश्रय आत्मेति फलतीति वैशेषिकादिमते इव आत्मनो ज्ञातृत्वमेव सिध्यति इति ज्ञातैवात्मा फलति ॥

अद्वैतिनः— एतावतापि विशिष्टाद्वैत्यभिमतानन्तावस्थाश्रयज्ञानातिरिक्त आत्मा न सिध्यति। तस्य स्वीकारे किं प्रमाणम् ॥

विशिष्टाद्वैतिनः— ज्ञाता तद्धर्मभूतं ज्ञानमित्युभयमद्वैत्युक्तरीत्यापि सिध्यत्येव। एतावद्विचार्यमवशिष्यते, किमेकमेव सत् ज्ञानं सामग्रीवशात् तत्तद्विषयोल्लेखरूपा अवस्था भजते, उत ज्ञातर्येव ज्ञानरूपा विषयोल्लेखात्मिका अवस्थाः जायन्ते इति संशये ॥ "न विज्ञातु र्विज्ञाते र्विपरिलोपो विद्यते ॥ (बृ० उ० अ० ४ ब्रा० ३ श्रु० ३०) "अथ यो वेदेदं जिघ्राणीति स आत्मा ॥ (छा० उ० प्रपा० ८ ख० १२ श्रु० ४) "एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः ॥ (प्रश्नो० प्रश्न ४ श्रु० ९) "जानात्येवायं पुरुषः ॥ (बृ० अ० ४ ब्रा० ४ श्रु० १४) इति श्रुतिवचनानि प्रमाणयद्भिः श्रुतिशरणैर्विशिष्टाद्वैतिभिः आत्मनो ज्ञानत्वं ज्ञातृत्वं तद्गतस्य ज्ञानस्य नित्यत्वं च स्वीक्रियते, तथा परिदृश्यमानज्ञानोत्पत्तिविनाशोपपादनार्थं धर्मभूतज्ञाने नित्ये एव

विकाससंकोचाद्यवस्थाः स्वीक्रियन्ते। इमे अर्थाः श्रुतिप्रमाण-सिद्धाः, न काल्पनिकाः, काल्पनिकार्थविषये एव गौरवलाघव चर्चा युज्यते। श्रुतिप्रमाणकोऽर्थो गुरुभूतोऽपि स्वीकार्य एव, स लाघवतर्कानुसारेण निराकर्तुं न शक्यते। लाघवमात्रदत्त-दृष्टयो नैयायिकादयः आत्मशब्दवाच्ये अर्थविषयोल्लेख-लक्षणानां ज्ञानशब्दाभिधेयानामवस्थानां सद्भावमभ्युपयन्ति। अतो श्रुतिप्रमाणकैः विशिष्टाद्वैतिभिः यथाश्रुतियोऽर्थोऽभ्युपगतः स गुरुभूतोऽपि स्वीकार्य एवेति सिध्यति। आत्मा ज्ञानस्वरूपो ज्ञाता च। तत्र स्वयं प्रकाशत्वात् स ज्ञानस्वरूपः स्वीक्रियते, तथा विषयप्रकाशकस्य धर्मभूतज्ञानस्याश्रयत्वात् ज्ञाता च स्वीक्रियते। धर्मधर्मिणोर्ज्ञानयोः स्वरूपभेदः। यथा तेजस्त्वेन सजातीययोरपि प्रभा प्रभावतो र्व्यक्तिभेदाद्धर्मधर्मिभावो भवति, तथा प्रकृते मन्तव्यम्।

किं च, संविन्मात्रस्यात्मत्वे शास्त्रस्य आत्मनो ज्ञानरूपत्व प्रतिपादकस्य श्रोता दुर्लभः। अनात्मानं प्रत्युपदिश्यते इत्यद्वैतिभि रपि न स्वीक्रियते। अद्वैतिमतरीत्या संविन्मात्र-रूप आत्मा ज्ञातृत्वाभावात् श्रोतुं न प्रभवति। यद्यहंकारः शृणोतीत्युच्येत, तर्हि तच्छ्रवणप्रयोज्यफलस्य अहमर्थान्त नाशगर्भमोक्षरूपत्वात् तस्य श्रवणस्य स्वनाशपर्यवसायित्वात् तस्य श्रवणे प्रवृत्ति नैव स्यात्, अतः शास्त्रस्य श्रोता संविदा-त्मवादे दुर्लभ एव स्यात्, इति शास्त्रस्याननुष्ठान लक्षणम-प्रामाण्यं प्रसज्यते॥

## ॥ अथात्मनो ज्ञातृत्वादिसद्भावतदभाव-विचारः ॥

अद्वैतिनः— आत्मनो ज्ञातृत्व कर्तृत्व भोक्तृत्वादि-प्रकाशो भ्रमएव देहात्माभिमानवत एव जायमानत्वात् स्थूलोऽहमित्यादिप्रतीतिवदिति ॥

विशिष्टाद्वैतिनः— आत्मनो ज्ञातृत्वादि प्रकाशः प्रमैव, न भ्रमः, देहात्मभ्रमशून्यानामपि तत्प्रतीतेः । ईश्वरस्य योगिनां मुक्तात्मनां च देहात्मभ्रमोनास्ति, तेषामपि ज्ञातृत्वादिप्रकाशो-वर्तते ॥ "हन्ताहमिमास्तिस्रो देवताः ॥ (छा० उ० प्रपा० ६ ख० ३ श्रु० २) "बहु स्यां प्रजायेय ॥ (तैत्ति० अ० व० २ अनु० ६ श्रु० २) "स ईक्षत लोकान्नु सृजा इति ॥ (ऐत० उ० अ० १ ख० १ श्रु० १) इति परब्रह्मणः संकल्पः श्रूयते, तथा नैत्वेवाहं जातु नासम् ॥ (गी० अ० २ श्लो० १२) "न कुर्यां कर्म चेदहम् ॥ (गी० अ० ३ श्लो० २४) "तान्यहं वेद सर्वाणि ॥ (गी० अ० ४ श्लो० ५) "तस्याहं न प्रण-श्यामि ॥ (गी० अ० ६ श्लो० ३०) "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ (गी० अ० ७ श्लो० ६) "वेदाहं सम-तीतानि ॥ (गी० अ० ७ श्लो० २६) "अहं सर्वस्य प्रभवो

मत्तः सर्वं प्रवर्तते ॥ (गी० अ० १० श्लो० ८) "तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥ (गीता अध्याय १२ श्लो० ७) "अहं बीजप्रदः पिता ॥ (गी० अ० १४ श्लो० ४) "वेदान्तकृद्वेदविदेव चाहम् ॥ (गी० अ० १५ श्लो० १५) "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि ॥ (गीता अध्या० १८ श्लो० ६६) इत्यादि भगवद्वचनानि सन्ति, एभिः सिध्यति देहात्मभ्रमरहितस्येश्वरस्य ज्ञातृत्वप्रकाशोऽस्तीति । तथा "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च ॥ (बृह० उ० अ० १ ब्रा० ४ श्रु० १०) इति श्रुत्या निर्धूताविद्यस्य योगिनो वामदेवस्य ज्ञातृत्व प्रतिभासोऽस्तीति सिध्यति ॥ "सर्वं ह पश्यः पश्यति ॥ (छा० प्रपा० ७ ख० २६ श्रु० २) इति श्रुत्या मुक्तस्यापि अविद्याशून्यस्य ज्ञातृत्वप्रतिभासोऽस्तीति सिध्यति । तदेवं देहात्मभ्रमसंभावनानर्हाणां निर्धूतविद्यानामीश्वरयोगिमुक्तानां ज्ञातृत्वप्रतिभासस्य श्रुतिसिद्धत्वात् तस्य प्रमात्वमेव युक्तं न तु भ्रमत्वमिति सिध्यति ।

किं च, ज्ञातृत्वाद्यवभासस्य भ्रान्तित्वे भ्रान्तेश्च साधिष्ठानत्वावश्यं भावात् अद्वैतिभि र्ज्ञानरूपस्य ब्रह्मण एव सर्वत्र परमाधिष्ठानत्वेन स्वीकारात् भ्रमस्थले चाधिष्ठानारोप्ययोः सामानाधिकरण्येन प्रतीतेरनुभवसिद्धत्वात् ज्ञातृत्वादिकं ज्ञानमिति भ्रमस्य स्वरूपेण भाव्यं, तथात्र तस्य स्वरूपं नानुभूयते ॥

अद्वैतिनः— यथा मणि प्रभायां सप्रभाकमण्यध्यासः प्रवर्तते, तथात्र संविदि संवेदनाश्रयतया प्रतीयमानस्याहंकारस्याध्यासः प्रवर्तते, अतो ज्ञातृत्वादिप्रकाशस्य भ्रमरूपत्वेनानुपपत्तिः ॥

विशिष्टाद्वैतिनः— यथा मणिधर्मत्वेन भासमानायां प्रभायां सप्रभाकमण्यध्यासोऽसंभवी, तथात्र अहमर्थधर्मत्वेन भासमानायां संविदि संवेदनाश्रयाहंकारस्याध्यासोऽसंभवीति ज्ञातृत्वादि प्रकाशस्य भ्रमत्वं न युक्तम् ॥

अद्वैतिनः— यथा स्फटिके च्छायापत्तिवशात् जपाकुसुमस्य रागो भ्रमेण भाति, यथा च अयः पिण्डे औष्ण्याश्रयवह्निसंसर्गादौष्ण्यं भ्रमेण भाति, तथात्र संविदि अहंकारच्छायापत्तिसंसर्गाभ्यां ज्ञातृत्वभानं सेत्स्यति ॥

विशिष्टाद्वैतिनः— जपाकुसुमे वास्तविकस्य रागस्यवह्नौ वास्तविकस्यौष्ण्यस्य सत्वात् दृष्टान्ते छायापत्तिसंसर्गाभ्यां तदारोपः संभवी, दार्ष्टान्तिके तु वास्तविकस्य ज्ञातृत्वस्य संविदि अहंकारे चाद्वैतिभिरनभ्युपगमात् इह संविदि तदध्यासोऽसंभवी ॥

अद्वैतिनः— अहंकारवृत्तिविशेषे अनुभूतेश्छायापत्त्या अहंकारे ज्ञातृत्वप्रकाश उपपद्यते, इति तद्गतस्य ज्ञातृत्वस्य संविदि आरोपो युक्तः ॥

विशिष्टाद्वैतिनः— "शब्दगन्धरसादीनां कीदृशी प्रतिबिम्बता" इत्युक्तरीत्या रूपशून्याया अनुभूते रहंकारवृत्तौ छायापत्ति दुर्वचा ॥

अद्वैतिनः— यथा चूर्णे हरिद्रायां चासिद्ध एव रागस्तयोः संसर्गादुत्पद्यते, तथात्र संविदि अहंकारेचासिद्धमेव ज्ञातृत्वादिकं संसर्गात् प्रकाशते इति मन्तुं युज्यते ॥

विशिष्टाद्वैतिनः— तथा स्वीकारे ज्ञातृत्वं वास्तविकं स्यात् यथा चूर्णहरिद्रासंयोगे जायमानो रागो वास्तविकः। अस्यां दशायां ज्ञातृत्वादिप्रकाशस्य भ्रान्तिसिद्धत्वं न स्यात् ॥

अद्वैतिनः— चूर्णहरिद्रा संयोगज रागवत् ज्ञातृत्वस्य उत्पत्त्यभ्युपगमे वास्तविकत्वापादनं युज्यते, परं तु वयं ज्ञातृत्वस्योत्पत्तिं न ब्रूमः, किं तु अध्यासम्। तच्चेत्थम्— क्रियाशक्तिमानहंकारः स चानुभूते व्यंजकः, आत्मस्थतया अभिव्यङ्ग्यानामभिव्यञ्जन मभिव्यञ्जकानां स्वभावः। दर्पणे व्यञ्जके वर्तमान इव प्रतिबिम्बो दृश्यते, व्यञ्जिकायां व्यक्तौ वर्तमाना जातिरनुभूयते, अतोऽनुभूतिव्यञ्जकोऽहंकारः स्वस्थितत्वेनानुभूतिमभिव्यनक्ति, अत एव अहं जानामीति भ्रमोभवति। ज्ञातृत्वादेर्भ्रान्तिसिद्धत्वं युक्तम् ॥

विशिष्टाद्वैतिनः— आत्मस्थतया अभिव्यङ्ग्याभि-व्यञ्जन मभिव्यञ्जकानां स्वभाव इति स्वीकारे बौद्धसम्मतः परतः प्रामाण्यपक्ष एव सिध्येत्, स्वतः प्रामाण्यानुरोधेन

यथावस्थितवस्तुग्राहकत्वमेव ज्ञान तत्करणव्यञ्जकानां स्वभाव इति स्वीकार्यम्।

किं च, आलोकादिषु अभिव्यञ्जकेषु आत्मस्थतया अभिव्यङ्ग्याभिव्यञ्जनं नोपलभ्यत इति, तस्याभिव्यञ्जक-स्वभावत्वकल्पनमसाधु। जातिर्व्यक्तेर्धर्म इति व्यक्त्या स्वनिष्ठतया जातेर्व्यञ्जनं युक्तमेव। दर्पणेन स्वनिष्ठतया मुखाभिव्यञ्जनं प्रतिफलनदोषकृतमिति तस्य स्वभावत्वं न सिध्यति। अतोऽस्वाभाविकत्ववादमवलम्ब्य अहंकारस्य स्वनिष्ठतया संविद् व्यञ्जकत्वं साधयितुं न शक्यम्।

किं च, शान्ताङ्गारेण सूर्यस्येव जडेनाहंकारेण स्वयं प्रकाशस्य ज्ञानस्याभिव्यञ्जनमपि न युज्यते।

किं च, स्वयं प्रकाशाया अनुभूतेरभिव्यक्तिनैरपेक्ष्यात् अभिव्यक्तिकल्पनमपि न युज्यते।

किं च, यथेन्द्रियाणां तत्तदर्थविषयज्ञानजनकत्वात् व्यञ्जकत्वम्, तथाऽहंकारस्य संविद्विषयकज्ञानजनकत्वात् व्यञ्जकत्वं यदि स्वीक्रियेत, तर्हि संविदो घटादेरिव परप्रका-श्यत्वापातात् त्वन्मतरीत्या जडत्व मिथ्यात्वादिकं प्रसज्येत।

किं च, संविदाऽनभिव्यक्तस्याहंकारस्य संविद् व्यञ्ज-कत्वे अहंकारस्य सत्यत्वं प्रसज्येत। संविदभिव्यक्तस्या-हंकारस्य संविद्व्यञ्जकत्वेऽन्योन्याश्रयः स्यात्, संविदाहंकारा-भिव्यक्तिः अहंकारेण संविदभिव्यक्तिरिति। अनभिव्यक्तायाः संविदो व्यञ्जकत्वे नम ः स्वयं प्रकाशत्वं हीयेत। संविदभि-

व्यक्तितः पश्चादभिव्यक्तस्याहंकारस्य संविदभिव्यक्तिं प्रति कारणत्वमपि दुर्वचम् ॥

अद्वैतिनः— आत्मा निर्विकार इति शास्त्रसिद्धम्। ज्ञातृत्वं तु गन्तृत्वादिवत् विकारात्मकम्, आत्मनो ज्ञातृत्वं स्वीक्रियते चेत् तस्य विकारित्वं स्यात्, अतो ज्ञातृत्वमन्तःकरणस्यैव धर्म इति स्वीकर्तुं युक्तम्। अन्तःकरणं कृतिमत्, तस्य सा कृतिश्चित्तिसन्निधानेन ज्ञानरूपेव भासते इति अन्तःकरणस्येदृशं ज्ञातृत्वं संभवति। वास्तविकं तु ज्ञातृत्वं नान्तःकरणे नापि संविदि। इदमनुमानेनापि सिध्यति। प्रयोगश्चेत्थम्–"ज्ञातृत्वकर्तृत्वाहन्त्व भोक्तृत्वादिकं नात्मधर्मः विकारात्मकत्वात् दृश्यत्वात् दृश्यनिष्ठत्वात् अहमर्थसमानाधिकरणतया प्रतीयमानत्वात्, संप्रतिपन्नवत्", अत्रैव विकारि द्रव्यस्थमिति वा साध्यं सुवचम्। विगीतोऽहं प्रतीतिः नात्मगोचरा अहं प्रतीतित्वात् देहात्मप्रत्ययवत्। अथवा— आत्मा ज्ञातृत्वकर्तृत्वाहन्त्वादिरहितः निर्विकारत्वात् अन्तःकरणरूपाहंकारव्यतिरिक्तत्वात् अजडत्वात् प्रत्यक्त्वात् आत्मत्वादिति ॥

विशिष्टाद्वैतिनः— यथा निर्विकारत्वमात्मनः श्रुतिभिः सिद्धम, तथा ज्ञातृत्वमपि श्रुतिसिद्धम्, तथा च श्रुतयः "अथ यो वेदेदं जिघ्राणीति स आत्मा ॥ (बृ० उ० अ० ६ ब्रा० ) "जानात्येवायं पुरुषः ॥ (बृ० उ० अ० ४

ब्रा० ४ श्रु० १४) "एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः ॥ (प्रश्नोप० प्रश्न ४ श्रु० ६) इत्याद्याः। अत उभयं श्रुतिसिद्धत्वादविरोधेन निर्वाह्यम्, नैकतरेणापरबाधोयुक्तो विनिगमनाविरहात्। निर्विकारत्वश्रुतीनां स्वरूपतो निर्विकारत्वे तात्पर्यम्। ज्ञातृत्वश्रुतीनां विविध धर्मभूतज्ञानाश्रयत्वप्रतिपादने तात्पर्यम्। धर्मभूतज्ञानस्य स्वरूपतो विकाराश्रयत्वेऽपि आत्मनि साक्षात् संबन्धेन विकाराभावात् न श्रुतीनां परस्पर विरोधः। ज्ञातृत्वस्य विकारात्मकत्वमपि न युक्तम् मृत्पिण्डवदात्मनः स्वरूपान्यथाभावस्याभावात्। ज्ञा धात्वर्थयोगितामात्रेण आत्मनः सविकारत्वं मन्तुं न युक्तम्, अस्ति भवतीत्यादि धात्वर्थ योगमात्रेणानुभूतेरपि सविकारत्वप्रसङ्गात्। अस्तित्वादे र्नित्यत्वाद्विकाररूपत्वं नास्तीति चेत् इदं ज्ञातृत्वेऽपि तुल्यम्॥ "न विज्ञातुर्विज्ञाते र्विपरिलोपो विद्यते ॥ (बृ० अ० ४ ब्रा० ३ श्रु० ३०) इत्यादि श्रुत्या आत्मनो ज्ञानं नित्यमिति सिद्धे ज्ञातृत्वस्य नित्यत्वं सिध्यति।

"यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात् क्रियते न जलाम्बरम्।
सदेव नीयते व्यक्तिमसतः संभवः कुतः ॥

तथा हेयगुणध्वंसादवबोधादयो गुणाः ।

प्रकाशयन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥"

इति शौनकवचनेनापि आत्मनो ज्ञानस्य नित्यत्वं सिध्यति। ज्ञानस्य नित्यत्वेऽपि तस्य विकासावस्थायामेव भानं न तु संकोचावस्थायामिति सदा भानं न भवति। धर्मभूतज्ञान गत संकोचविकासाभ्यामात्मनो विकारित्वं न भवति, आत्मनः साक्षात् विकाराश्रयत्वाभावात्। परम्परया विकाराश्रयत्वं च स्वरूपविषयक निर्विकारत्वश्रुत्या न विरुध्यते।

विक्रियात्मकत्वादिहेतुकानुमानानि बाधव्यभिचारादि-दोप दूषितानि न ज्ञातृत्वादेरात्मधर्मत्वाभावं साधयितुं क्षमन्ते। नित्यज्ञातृत्वमात्मनः प्रतिपादयन्त्या श्रुत्या बाधः स्फुटः। विक्रियात्मत्वादिति यदि स्वरूप परिणामो विवक्ष्यते, तर्हि असिद्धिः, ज्ञातृत्वस्यात्मस्वरूप परिणामरूपत्वाभावात्। यदि क्रियायोगमात्रं विवक्ष्यते, तर्हि अस्त्यादिक्रियायोगमात्मधर्म-भूतमवलम्ब्य व्यभिचारः। दृश्यत्वान्नात्मधर्म इत्यनुमानं निर्विशेपत्व निराकरणार्थं प्रतिपादितया युक्त्या दूषितम्। दृश्यनिष्ठत्वादिति हेतुश्च आत्मनो दृश्यत्वसमर्थनेनदूषितः। यदि दृश्यनिष्ठत्वादित्यस्य द्रष्टृनिष्ठत्वाभावे तात्पर्यं तर्हि विरोधः प्रसज्येत। ज्ञातृत्वं न ज्ञातृधर्म इति दुर्वचम्। अहमर्थसमाना-धिकरणतया प्रतीयमानत्वात् इतिहेतुरात्मत्वेन व्यभिचरितः। अस्ति हि अहमात्मेति सामानाधिकरण्यम्। विकारिद्रव्यस्थ-मिति साध्येऽपि सिद्धसाधनता अस्माभिः आत्मनः शरीर-

संवन्धादि विकारवत्वस्वीकारात्। एव महं प्रत्ययो नात्मगोचर इत्यनुमाने आत्मशब्दार्थो यदि ज्ञानमात्रं तदा सिद्धसाधनम्। यदि आत्मशब्दार्थोऽहमर्थो विवक्षितः तर्हि विरोधोऽपसिद्धान्तश्च प्रसज्यते। भ्रान्तिस्थलेऽहं प्रतीतेरनात्मविषयकत्वे सत्यपि सर्वत्र तथा भवितव्यमिति नियमो नास्ति। आत्मा ज्ञातृत्वादिरहितः निर्विकारत्वात् इत्यनुमाने यदि विकारपदेन धात्वर्थयोगित्वं विवक्षितम्, तर्हि हेतुरसिद्धः आत्मनोऽस्त्यादिधात्वर्थयोगित्वेन निर्विकारत्वहेतोरसत्वात्। यदि विकारपदेन अन्यथाभावरूपो विकारो विवक्षितः तर्हि ज्ञातृत्वस्य स्वाभाविकत्वात् अन्यथाभावराहित्यहेतुनाज्ञातृत्वाभावो दुःसाधः ज्ञातृत्वस्यान्यथाभावरूपत्वाभावात्। अन्तःकरणरूपाहंकारव्यतिरिक्तत्वहेतुना आत्मनो ज्ञातृत्वादिराहित्यं दुःसाधं तस्यातिप्रसञ्जकत्वात्। तेन हेतुना आत्मनो ज्ञानरूपत्वाभावोऽपि हि साधयितुं शक्यते।

किं च, स हेतुरप्रयोजकोऽपि अनुकूलतर्काभावात्। आत्मनो ज्ञातृत्वाभ्युपगमे जडत्व पराक्त्वानात्मत्वादिप्रसङ्ग इति तर्कोऽपि छिन्नमूलः ज्ञातृत्वेऽप्यजडत्वादिकमस्त्विति पर्यनुयोगसंभवेन व्याप्तेरभावात्। अनयैव रीत्या अजडत्वादित्याद्यनुमानमपि दूषितं भवति।

किं च, अहंकारस्य ज्ञातृत्वं स्वीकुर्वताऽद्वैतिना देहोऽचेतनः दृश्यप्रकृतिपरिणामत्वादित्याद्यनुमाने देहस्याचेतनत्वं कथं साध्यते अहंकारमादाय व्यभिचारस्य प्रवृत्तेः।

ज्ञातृत्वादचेतनत्वरूपसाध्याभाववति अहंकारे दृश्यप्रकृतिपरिणामत्वरूपहेतुर्हि वर्तते। यद्युच्येत प्रकृतिपरिणामत्वेऽहंकारे देहे चाविशिष्टे सत्यपि यथा देहादौ देहत्वादिकं व्यवस्थितम्, तथा देहे अचेतनत्वमन्तःकरणे च ज्ञातृत्वं व्यवस्थितं स्वीक्रियत इति, तर्हि अन्तःकरणस्यैव दृशित्वमपि व्यवस्थितस्वभावात्मना साधयितुं शक्यम्। प्रकृतिरूपस्य विकारिद्रव्यविशेषस्य परिणामविशेषेण ज्ञातृत्वं स्वीकुर्वन्नद्वैतवादीभूतचैतन्यवादमनुसृत्यात्मापह्नवे प्रवर्तते इति फलति। तदेवं सिद्धं ज्ञातृत्वादिरात्मनोऽनध्यस्तो धर्म इति ॥

## ॥ अथाहमर्थस्यात्मत्वानात्मत्वविचारः ॥

अद्वैतिनः— अहमर्थो नात्मा सुषुप्तिमोक्षयोरननुवर्तमानत्वात्, आत्मा तु नित्यत्वात्सुषुप्तिमोक्षयोरनुवर्तते। अननुवर्तमानस्यानुवर्तमानस्य च भेदावश्यंभावात् अहमर्थो नात्मेति फलति, अहमर्थस्य मोक्षेऽनुवृत्तावज्ञत्वसंसारित्वादिकमपि प्रसज्येत। अतोऽहमर्थो नात्मा किं तु सुषुप्तिमोक्षयोरनुवर्तमाना संविदेवात्मेति सिद्धम्। तस्मिन् प्रत्यग् रूपे चैतन्ये साक्षादहमर्थस्याध्यासः, तदुत्तरं तदुपाधिकः कर्तृत्वाद्यध्यासः प्रवर्तते। अतोऽहंकरोमीत्यादिव्यवहारः॥

विशिष्टाद्वैतिनः— यदि सुषुप्तावहमर्थो नानुवर्तेत, तर्हि जागरे "पूर्वेद्युर्योऽहं तदकरवं सोऽहमिदानीमिदं करोमि" इति यदिदं प्रतिसन्धानं जायते, तदिदं प्रतिसन्धानं नोपपद्येत,

नह्यन्येनाहंकारेणानुभूतोऽर्थोऽन्येनाहमर्थेन स्मर्तुं शक्यते, तथा सति देवदत्तेनानुभूतस्य यज्ञदत्तेनापि स्मरणं प्रसज्यते। ततश्च प्रतिसंधानेन पूर्वेद्युस्तनाहमर्थस्येदानींतनाहमर्थस्य चाभेदसिद्धेस्तस्य मध्ये सुषुप्तिकालेऽप्यनुवृत्तिः सिध्यति। अतः सुषुप्तावननुवृत्तत्वहेतुरसिद्धः अतोऽहमर्थस्यानात्मत्वं न सिध्यति॥

अद्वैतिनः— यदि सुषुप्तावप्यहमर्थोऽनुवर्तेत, तर्हि सुषुप्तावप्यहमर्थप्रकाशः स्यात्। सुषुप्तावहमर्थप्रकाशाभावाद्-हमर्थानुवृत्तिः सिध्यति॥

विशिष्टाद्वैतिनः— यद्यप्यस्माकं मते सुषुप्तावप्य-हमर्थस्य प्रकाशः संमतः। तथाप्यभ्युपेत्य वादेन ब्रूमः सुषुप्ताव-हमर्थप्रकाशाभावेऽपि तदननुवृत्तिर्न सिध्येत्, विद्यमानेन प्रकाशमानेन भाव्यमिति निर्बन्धाभावात्, सुषुप्तावहमर्थो-ऽप्रकाशमान एवास्तु को विरोधः॥

अद्वैतिनः— सुषुप्तावहमर्थस्याप्रकाशमानस्यापिसद्भावे किं प्रमाणम्?

विशिष्टाद्वैतिनः— पूर्वोत्तरवर्त्यहमर्थप्रत्यभिज्ञाबलादेव मध्येऽपि अहमर्थसद्भावः सिध्यति। तादृशप्रत्यभिज्ञैव स्वापे-ऽहमर्थसद्भावे प्रमाणम्।

अद्वैतिनः— स्वापदशायां स्वापकालस्य स्फुरणं न भवति, अतो जागरोत्तरं तत्स्मरणं न युज्यते, तथा च स्वाप-

कालावच्छेदेनाहमर्थस्य सद्भावः कथं कल्पयितुं युज्यते ॥

विशिष्टाद्वैतिनः— यथा कल्पितकालविशेषविशिष्टः स्वाप इदानीं जागरेऽनुसन्धीयते, तथा कल्पितकालविशिष्टस्याहमर्थस्यापि जागरेऽनुसन्धानं युज्यते। अहद्वयस्य राज्यन्तरितत्वव्याप्तिवलेन पूर्वोत्तरकालावधिकमध्यकालकल्पनपूर्वकं यथा अस्वाप्समिति जागरे तदानींतनकालावच्छिन्नतया स्वापोऽनुसन्धीयते, तथा जागरे अतीतस्वापकालावच्छिन्नाहमर्थस्याप्यनुसन्धानमुपपद्यत इतीदमेव स्वापकालेऽहमर्थानुवृत्तौ प्रमाणम्।

किं च, मध्ये अर्थात् सुषुप्तिकालेऽहमर्थाभावे संस्काराधाराभावात् जागरे प्रतिसन्धानाभावः प्रसज्येत ॥

अद्वैतिनः— सुषुप्तिकाले संवित्स्वरूपमविद्यास्वरूपं च वर्तते, तयोरन्यतरस्य संस्काराधारत्वं संभवति, तथा जागरेऽपि सत्त्वात् प्रतिसन्धोत्पत्तिर्युज्यते ॥

विशिष्टाद्वैतिनः— सुषुप्तिकाले संविदविद्ययोरनुवृत्तौ प्रमाणं नास्ति। ज्ञातारमन्तरेण ज्ञानस्याज्ञानस्य च स्थितिर्न संभविनी। ज्ञाता चाहमर्थः स च भवन्मते सुषुप्तिकाले नास्ति, तस्मिन्नसति कथं ज्ञानाज्ञानयोः स्थितिर्युज्यते। अहमर्थ एव हि "अहं जानामि" "अहं न जानामीति" ज्ञानाज्ञानयोराश्रयोऽनुभवसिद्धः। तस्याभावे तयोः स्थितिर्नयुज्यते।

किं च, संवित्स्वरूपस्य संस्काराधारत्वं न युक्तं संविद-

स्त्वन्मते निर्विकारत्वान्निर्विशेषत्वाच्च। अविद्यास्वरूपस्य-संस्काराधारत्वमपि न युज्यते, तथा सति संस्काराधारस्य तस्यैव ज्ञातृत्वं स्यात्। अविद्यागतसंस्कारेणाहमर्थस्य स्मृत्युदयो न युज्यते, नह्यन्यगतसंस्कारेणान्यस्य स्मृतिः संभवति, तथा सति देवदत्तसंस्कारेण यज्ञदत्तस्य स्मरणं स्यात्॥

अद्वैतिनः— अविद्या उपादानम्, अहंकाररूपोऽहमर्थं उपादेयः, अत उपादानोपादेयभावान्नियामकात् अविद्यागत-संस्कारेणाहमर्थस्य स्मृत्युदयो युक्तः॥

विशिष्टाद्वैतिनः— तर्हि "यस्मिन्नेव हि सन्ताने आहिता कर्मवासना। फलं तत्रैव बध्नाति कार्पासे रक्तता यथा॥" इति क्षणिकज्ञानसन्तानवादिभिरुक्तस्य पूर्वपूर्वज्ञान-गतसंस्कारस्योत्तरोत्तरज्ञाने विशेषाधायकत्वस्य प्रकारो भवता समाश्रितो भवति। स हि पन्थाः क्षणिकात्मवादिनाम्, नतु स्थिरात्मवादिनां स्वीकारार्हः॥

अद्वैतिनः— अस्माभिः सत्कार्यवादस्याभ्युपगतत्वात् अविद्या तद्विवर्तयोरेकत्वादुपादानगतसंस्कारस्योपादेये कार्य-करत्वं युज्यत एव॥

विशिष्टाद्वैतिनः— उपादानोपादेययोः काल्पनिकमैक्यं बौद्धैरपि स्वीकृतम्, वास्तविकमैक्यं तु भवद्भिरपि न स्वीक्रियत इति तन्मतनिरासप्रक्रियया भवतामिदं मतमपि

निरस्तं भवति। अतः संविदविद्ययोः संस्काराधारत्वायोगात् अहमर्थस्यैव संस्काराधारत्वस्य युक्तत्वात् उत्तरकालिकप्रतिसन्धानोपपत्तये सुपुप्तावपि संस्काराधारस्याहमर्थस्यानुवृत्तिरेव युक्तिमती।

किं च, सुषुप्तिकाले संविदविद्ययोः सद्भावे किं प्रमाणम् ?

अद्वैतिनः— सुखमनुभवन्नहमस्वाप्समित्यर्थकेन सुप्तोत्थितस्य जायमानेन "सुखमहमस्वाप्समि" ति परामर्शेन सुषुप्तौ संविदविद्ययोः सद्भावः सिद्धो भवति, तत्र अस्वाप्समिति अविद्या परामृश्यते, सुखमिति संवित् परामृश्यते। अतोऽयमेव परामर्शः सुषुप्तिकाले संविदविद्ययोः सद्भावे प्रमाणम्॥

विशिष्टाद्वैतिनः— तेन परामर्शेन स्वस्वस्वापविशिष्टोऽहमर्थ एव परामृश्यते इति, अयं परामर्शः सुषुप्तावहमर्थसद्भावे प्रमाणं भवति, इति अस्मदिष्टसिद्धिः॥

अद्वैतिनः— जागरे एवाहमर्थः प्रकाशते, तस्मिन स्वापसुखाश्रयात्माभेदाध्यासात् तथा प्रतीतिरुपपद्यत इति न तेन परामर्शेन सुषुप्तावहमर्थसद्भावः सिध्यति॥

विशिष्टाद्वैतिनः— इदानींतनसुखसंविद्विशिष्टात्मनि तदानींतनस्वापविशिष्टाहमर्थस्याध्यासेनैव 'सुखमहमस्वाप्समि' ति, इति प्रतीतिः किं न निरुह्येत। अतः स्वरसतस्तेन परामर्शेन तदानीमहमर्थसद्भावोऽप्यवश्यं सिध्येदेव॥

अद्वैतिनः— सुषुप्तावहमर्थप्रकाशस्याननुभूयमानत्वात् तेन परामर्शेन तदानीं कथमहमर्थसद्भावः सिध्येत ॥

विशिष्टाद्वैतिनः— सुषुप्तौ अज्ञानसुखसाक्षिसंविदोऽपि प्रकाशस्याननुभूयमानत्वात् तदा कथं तेन परामर्शेन अज्ञान-सुखसाक्षिसंवित्सद्भावः सिध्येत् ॥

अद्वैतिनः— अस्य परामर्शस्य बलादेव सुषुप्तिकाले अज्ञानसुखसाक्षिसंवित्प्रकाशः कल्प्यते ॥

विशिष्टाद्वैतिनः— तर्हि अनेन परामर्शेनैव तदा अहमर्थप्रकाशोऽपि कल्पयितुं शक्यते इति सममेतत् ॥

अद्वैतिनः— सुषुप्तिकाले अहमर्थप्रकाशकल्पनमुपलम्भ-विरुद्धम्। एतावन्तं कालं "न किंचिदहमवेदिषम्" इत्यनेन उपलम्भेन सुषुप्तावहमर्थप्रकाशाभाव एव सिध्यति ॥

विशिष्टाद्वैतिनः— तर्हि अनेनैवोपलम्भेन सुषुप्तिकाले अज्ञानसुखसंवित्प्रकाशाभावोऽपि सिध्यतीति समानमेतत् ॥

अद्वैतिनः— अस्मिन् परामर्शे "नावेदिष" मित्यनेन बहिर्विषयवेदनमेव निषिध्यते, न त्वान्तरर्थवेदनमिति सुषुप्तौ अज्ञानसुखसाक्षिसंवित्प्रकाशसद्भावे न विरोधः ॥

विशिष्टाद्वैतिनः— तर्हि तद्वदेव आन्तराहमर्थप्रकाशो-ऽपि नानेन परामर्शेन निषिध्यत इति सुषुप्तावहमर्थप्रकाश-सद्भावेऽपि न दोष इति सममेतत् ॥

अद्वैतिनः— "मामप्यहं न ज्ञातवान्" इत्ययमुपलम्भो-विरुध्यते ॥

विशिष्टाद्वैतिनः— स उपलम्भः केन विरुध्यते, किमहमर्थेन विरुध्यते ? उत तत्प्रकाशेन विरुध्यते ? उत प्रकाश-सामान्येन विरुध्यते ? नाद्यः, अयमुपलम्भो यद्यहमर्थाभावं गोचरयेत्, तर्हि अहमर्थेन विरुध्येत, परं तु अहमर्थाभावं न गोचरयति। तथा सति "एतावन्तं कालं नाहमासम्" इत्युपलम्भस्वरूपेण भाव्यम्। तथोपलम्भस्य स्वरूपं नास्ति, किं तु "मामप्यहं न ज्ञातवान्" इत्युपलम्भस्य स्वरूपम्। अस्यायमेव भावः विद्यमानमपि मां न ज्ञातवानिति। न द्वितीयः, मामप्यहं न ज्ञातवानित्यस्य मामन्यच्च किमपि न ज्ञातवानिति ज्ञानसामान्यनिषेधे तात्पर्यं प्रतीयते, तथा चास्यो-पलम्भस्याहमर्थप्रकाशेन यथा विरोधः, तथा संवित्प्रकाशेनापि सह विरोधः स्यादिति सुषुप्तौ संवित्प्रकाशाभ्युपगमोऽपि विरुध्येत। सामान्यनिषेधस्य यावद्विशेषविषयत्वावश्यं भावात् ॥

अद्वैतिनः— सुषुप्तिकाले संविदः स्वप्रकाशेन भानं भवति, अयं निषेधः विषयप्रकाशगोचरः न स्वप्रकाशगोचरः— अतः संवित्प्रकाशस्वीकारे न विरोधः ॥

विशिष्टाद्वैतिनः— सुषुप्तिकाले अहमर्थस्य प्रत्यक्त्वै-कत्वानुकूलत्वविशिष्टाकारेण स्वप्रकाशेन भानं भवति, निषेधस्तु

देवत्वादिविशिष्टाकारेण अहमर्थभानविषयक इति व्यवस्था संभवति, अतः सुषुप्तौ प्रत्यक्त्वादिविशिष्टाकारेणाहमर्थप्रकाशे न विरोध इति समग्रेतत्। अत्र सुप्तोऽहमीदृशोऽहमिति च मां न ज्ञातवानिति ह्यनुभवप्रकारः। अतो निषेधस्य बाह्यदेवत्व-मनुष्यत्वादिविशिष्टाहमर्थभानविषयकत्वं निश्चीयत इति प्रत्य-क्त्वादिविशिष्टाकारेण स्वरूपप्रकाशेन भाने न विरोधः। न तृतीयः, यदि मामप्यहं न ज्ञातवानिति निषेधः प्रकाशमात्रस्य विरोधी, तर्ह्यज्ञानसंविदोः प्रकाशस्यापि निषेधः स्यादिति भवतां मतमुन्मूल्येतेति तस्य निषेधस्य प्रकाशसामान्य-विषयकत्वं मन्तुं न युज्यते ॥

अद्वैतिनः—"नाह खल्वयमेवं संप्रत्यात्मानं जाना-त्ययमहस्मीति, नो एवेमानि भूतानि, विनाशमेवापीतो भवति ॥ (छा० प्रपा० ८ ख० ११ श्रु० १) इति सुषुप्तविषय-श्रुत्या न जानातीति अहमर्थविषयकप्रकाशसामान्यस्य निषेधात् सुषुप्तावहमर्थप्रकाशकल्पनं विरुध्यते। अतः सुषुप्तौ अहमर्थ-प्रकाशो न युज्यते ॥

विशिष्टाद्वैतिनः— "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् ॥ (बृ० उ० अ० ४ ब्रा० ३ श्रु० २१) इति सुषुप्तविषयश्रुत्या आन्तरविषयकप्रकाशस्यापि निषिद्धत्वात् संवित्सुखादेरान्तरत्वात् सुषुप्तौ संवित्सुखादि प्रकाशोऽपि विरुध्यत इति तत्प्रकाशकल्पनमपि न युज्यते ॥

अद्वैतिनः— सुषुप्तिकाले अज्ञानस्याननुभूतत्वे जागरे "नाहमज्ञासिषम्" इति प्रतिसन्धानं न संपद्येत। प्रतिसन्धानं च जायते, तस्य प्रतिसन्धानस्यान्यथोपपादयितुमशक्यतया "न बाह्यं किञ्चन वेद नान्तरम् ॥ (बृ० ४।३।२१) इति श्रुतेः "न किञ्चिदज्ञासिषम्" इति परामर्शस्य च अज्ञान-संविद्व्यतिरिक्तविषयकतया संकोचः कल्पनीय इति सुषुप्तौ अज्ञानविषयकसंवित्सुखादिप्रकाशस्वीकारे न विरोधः ॥

विशिष्टाद्वैतिनः— सुषुप्तिकालस्येव सुषुप्तिकालिका-ज्ञानस्यापि उद्बोधकाले एव कल्प्यमानत्वेन "न किञ्चिद-ज्ञासिषम्" इति अज्ञानप्रतिसन्धानमुपपद्यत इति, सुषुप्तिकाले अज्ञानानुभवस्यावश्यकता नास्तीति सुषुप्तावज्ञानसंवित्प्रकाशो नाभ्युपेयः ॥

अद्वैतिनः— प्रातश्चत्वररूपमधिकरणं दृष्टवतैव पुरुषेण मध्याह्ने परदृष्टेन योग्याननुस्मरणलिङ्गेन गजाभावमनुमाय प्रातश्चत्वरे गजो नासीदिति वक्तुं शक्यते, न तु प्रातश्चत्वरम-दृष्टवता, तथा स्वापे अज्ञानाश्रयभूतां संविदमनुभूतवतैव तदानीमज्ञानस्याननुभवेऽपि योग्याननुस्मरणलिङ्गेन स्वाप-कालिकमज्ञानमनुमाय "नकिञ्चिदज्ञासिषम्" इति वक्तुं शक्यते, न तु स्वापकाले संविदमननुभूतवता। अतः स्वापे संविदनुभवः फलतीति संवित्प्रकाशः स्वीकार्यः ॥

विशिष्टाद्वैतिनः— अद्वैतिभिरज्ञानाश्रयत्वेन स्वीकृतायाः संविदोऽनुभवः स्वापावस्थायां यः कल्प्यते, सोऽनावश्यकः, तस्मिन्नसत्यपि "न किञ्चिदज्ञासिषम्" इति परामर्शस्य निर्वोढुं शक्यत्वात्। यथा अहमर्थात्मवादिभिर्नैयायिकादिभिः पूर्वोत्तरजाग्रदवस्थावच्छिन्नैक्यप्रत्यभिज्ञया मध्ये स्वापकालेऽपि अहमर्थस्य सद्भावमनुमाय तस्मिन्नहमर्थे स्वापकाले ज्ञानवति सति प्रबोधकाले तद्वत्तयाऽहमर्थोऽवश्यं स्मर्येत, न च स्मर्यते इति योग्यानुस्मरणलिङ्गेन स्वापकालिकत्वेनानुमितेऽहमर्थे ज्ञानाभावोऽनुमीयते, तादृशानुमितिनिबन्धन एव "अहं तदा न किंचिदज्ञासिषम्" इत्यनुभवः इति निरूह्यते, तथाऽद्वैतिभिः स्वापकाले संविदोऽज्ञानाश्रयतयाऽभिमतायाः प्रकाशाभावेऽपि जागरकाले स्वापकाले संविदः स्थितिमनुमाय तस्यां योग्याननुस्मरणलिङ्गेनाज्ञानमनुमाय "न किंचिदज्ञासिष" मिति निर्वोढुं शक्यत इति स्वापे संवित्प्रकाशाभ्युपगमोऽप्रामाणिकः।

किं च, स्वापकाले अधिकरणोपलम्भस्यावश्यकत्वेऽपि अहमर्थस्यैव स्वापकाले प्रकाशकल्पना युक्तिमती न संविदः। अहं न ज्ञातवानिति अहमर्थ एव हि अज्ञानाश्रयतया बुध्यते। न च सुषुप्तावहमर्थप्रकाशकल्पने "नाह खल्वयमेवं संप्रत्यात्मानं जानाति ॥ (छान्दोग्योप० प्रपा० ८ ख० ११ श्रु० १) इति श्रुत्या विरोधः, न हि तत्र अहमिति न जानातीति श्रूयते, किं तु अयमहमस्मीति नजानातीति श्रूयते।

न च "मामप्यहं न ज्ञातवान्" इत्यनुभवविरोधः "न बाह्यं किञ्चिन वेद नान्तरम् ॥ (बृ० ४।३।२१) "न किञ्चिदहमवेदिपम्" इत्यनुभवविरोधस्य संवित्प्रकाशपक्षेऽपि तुल्यत्वात्। अतः सिद्धं सुषुप्तावहमर्थस्याभावोऽहमर्थप्रकाशस्याभावश्च सुषुप्तौ न कथंञ्चिदपि साधयितुं शक्यते। सुषुप्तौ अहमर्थस्य तत्प्रकाशस्य च सद्भावः सिध्यत्येव।

सुप्तोत्थितस्य "सुखमहमस्वाप्सम्" इति परामर्शो जायते। अयं परामर्शः सुषुप्तिकाले सुखरूपतयाऽनुभूतमहमर्थं गोचरयति, पूर्वकालानुभूतार्थप्रत्यभिज्ञायोग्यानुपलब्धिभ्यामनुमितौ अतीतकालस्वापौ च गोचरयति। स्वतोऽवभासमानस्याहमर्थस्यात्मनः आनुमानिकातीतकालस्वापवैशिष्ट्यं गोचरयन् प्रत्यभिज्ञाविशेषोऽयं परामर्शः "सुखमहमस्वाप्सम्" इति "अत्रायं पुरुषः स्वयं ज्योतिर्भवति ॥ (बृ० उ० अ० ४ ब्रा० ३ श्रु० ६) "एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः ॥ (प्रश्नोप० प्रश्न ४ श्रु० ६) इति च ज्ञातुः पुरुषस्य स्वयं ज्योतिष्ट्वविज्ञानात्मत्वयोः श्रुतत्वात् ज्ञातुरहमर्थस्य स्वयं प्रकाशत्वं सिध्यतीति सुषुप्तौ तस्य भानं स्वयं प्रकाशत्वात् सिध्यति। "सुखमहमस्वाप्सम्" इति परामर्शे सुखमित्यनेन सुषुप्तिकालेऽनुकूलतया भासमानत्वमनुसंहितं भवति। अहमित्यनेन स्वस्मै प्रकाशमानत्वरूपं प्रत्यक्त्वमनुसंहितं भवति। यथा "मन्दमगच्छन्मधुरमगाय" मिति परामर्शेन गमनगानकालिके मान्द्यमाधुर्ये विषयीक्रियेते,

तथा स्वापकालिकं सुखमत्रापि विपर्यीक्रियते। "सुखमहमस्वाप्स" मित्यत्र क्रियाविशेषणतया सुखस्य भानेऽपि क्रियायाः स्वतः सुखाश्रयत्वाभावात् पुरुषद्वारा क्रियाविशेषणत्वमेवाश्रयितुं युक्तम्। आत्मनोऽहमर्थस्य स्वयं ज्योतिष्ट्व श्रुतिबलात् यत् सुषुप्तिकालेऽपि स्वयं प्रकाशत्वं स्वीकृतं तत् प्रत्यक्त्वैकत्वानुकूलत्वविशिष्टवेषेणैवेति न तदानीमपि निर्विशेषानुभवः। तदतिरिक्ताकारेणात्मभानं सुषुप्तौ न संभवति, अतिरिक्ताकारस्य धर्मभूतज्ञानेनैव ग्राह्यत्वात् सुषुप्तिकाले धर्मभूतज्ञानस्यात्यन्तं संकुचितत्वेन तेन तद्भासनायोगात्। न च सुषुप्तावहमर्थस्य सत्वे तस्य प्रकाशः स्यात्, अप्रकाशादनुमीयते सुषुप्तावहमर्थो नास्तीति शङ्कनीयम्, सुषुप्तावहमर्थसद्भावप्रकाशयोः साधितत्वात्। न चाहमित्यभिमन्यमान एवास्वाप्समिति परामर्शः प्रसज्यत इति वाच्यम्, आत्मस्वरूपस्य स्वप्रकाशत्वेऽपि स्वस्यैवाभिमतिरूपत्वेन तदाश्रयत्वभावात् अहमर्थगतज्ञानत्वस्य तद्गताहंत्वप्रकाशकत्वस्य च स्वाप्रकाश्यत्वात् तथा परामर्शं आपादयितुं न शक्यते। अतः सिद्धं सुषुप्तावप्यहमर्थोऽनुवर्तते भाति चेति। अहमेव पूर्वं सुप्त इति कथयन्तोऽद्वैतिनोऽहमर्थस्तदानीं नास्तीति प्रतिजानानाः स्ववचनविरोधमपि नावयन्ति।

"न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्।
सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः॥

(छा० प्रपा० ७ ख० २६ श्रु० २)

इति श्रुत्या मोक्षावस्थायामात्मनोद्रष्टृत्वस्य प्रतिपादनात् मुक्तावपि अहमर्थो ज्ञाता आत्मा अनुवर्तत इति, मुक्तावहमर्थस्यानुवृत्तिर्वक्तुं न शक्यते, तद्बलादनात्मत्वमपि साधयितुं न शक्यते ॥

अद्वैतिनः— मुक्तौ अहमर्थस्यानुवृत्तौ अज्ञत्वसंसारित्वादिकं प्रसज्यते। संसारे यदा यदा अहमर्थस्तदा तदा अज्ञत्वादिकमिति व्याप्तिर्हि सिद्धा ॥

विशिष्टाद्वैतिनः— संसारदशायां संविदोप्यज्ञानव्याप्तत्वात् मोक्षे संविदनुवृत्तौ अज्ञत्वादिकं प्रसज्यत इति सुवचमिति मोक्षे संविदननुवृत्तिः कल्प्या स्यात् ॥

अद्वैतिनः— यथावस्थितसंवित्स्वरूपप्रकाशो नाज्ञत्वादि व्याप्यः, अतो मोक्षे यथावस्थितसंवित्प्रकाशस्य सत्त्वात् नाज्ञत्वादिकं प्रसज्यते ॥

विशिष्टाद्वैतिनः— नाहमर्थोऽज्ञत्वादिव्याप्यः, किं तु यथावस्थितविपरीताहमर्थप्रकाश एवाज्ञत्वादिव्याप्यः, मोक्षे च यथावस्थिताहमर्थप्रकाशस्यैव सत्त्वात् तदानीं नाज्ञत्वादिप्रसक्तिरिति समानमेतत्।

किं च, यदि मुक्तौ अहमर्थो नानुवर्तेत, किं तु ध्वस्येत, तर्हि कस्यापि प्रेक्षापूर्वकारिणः स्ववधार्थं प्रवृत्तेरयोगात् मोक्षशास्त्रमधिकारिशून्यं स्यादिति तस्य शास्त्रस्याननुष्ठापकत्वलक्षणमप्रामाण्यं प्रसज्यते। यदि मुक्तौ सुषुप्तावपिसूक्ष्मरूपेणापि

अहमर्थः स्यात्, तर्हि कथंचित् तदर्थप्रवृत्तिर्घटेतापि, परं तु मोक्षे अहमर्थस्य निरन्वयविनाशोऽद्वैतिभिः स्वीक्रियत इति मोक्षशास्त्रस्याधिकार्यभावः स्यादेव ॥

अद्वैतिनः— अहमर्थः संविद्रूपस्यात्मनः स्वस्य च भेदमगृह्णन् भेदाग्रहवशात् मोक्षोपाये प्रवर्तते, न मोक्षशास्त्रस्याधिकार्यभावः ॥

विशिष्टाद्वैतिनः— संविदात्मनः स्वस्य च भेदमगृह्णाणोऽहमर्थः मोक्षे स्वविनाशं जानन् संविदोऽपि नाशमभिमन्येत। स च स्वविनाश एवेति मन्यमानो मोक्षोपाये नैव प्रवर्तेत ॥

अद्वैतिनः— मोक्षे स्वावस्थानं भ्रमेण गृहीत्वा मोक्षोपाये प्रवर्ततेऽहमर्थः ॥

विशिष्टाद्वैतिनः— मोक्षे स्वावस्थानभ्रमवान् स मोक्षरूपफलस्य स्वरूपं यथावन्न जानातीति तस्य कथं तदर्थिसंभवः? उपायाधिकारो वा? मोक्षेऽहमर्थस्थितिमपेक्षमाणस्य तस्य भवन्मतरीत्या नित्यं संसार एव स्यादिति मोक्षोऽसंभावित एव ॥

अद्वैतिनः— यद्यप्यहमर्थः स्वस्थितिभ्रमेणैव मोक्षोपाये प्रवर्तते, तथापि तस्योत्पन्नमद्वैतज्ञानमनिच्छतोऽपि तस्य विनाशं साधयतीति मोक्षेऽहमर्थस्य नानुवृत्तिः ॥

विशिष्टाद्वैतिनः— राज्यकामस्य शिरश्छेदवत् स्वस्थितिं मोक्षे कामयमानस्यायं स्वनाशरूपोऽपवर्गं उपनयतीति शास्त्रस्य पुरुषार्थपरत्वं व्याहतमेव भवति ॥

अद्वैतिनः— अहमर्थः आध्यात्मिकादितापत्रयेणाभिहन्यमानस्तच्च तापत्रयं स्वाविनाभूतं मन्वानः स्वविनाशमन्तरा तापत्रयस्याविनाशमुत्पश्यन् तद्विनाशमावश्यकं मन्वानः स्वविनाशमपि अनुमन्यमान एव मोक्षोपाये प्रवर्तत इति मोक्षस्य पुरुषार्थपर्यवसानं सिध्यति ॥

विशिष्टाद्वैतिनः— यथा संसारोऽनिष्टत्वात् मृत्युव्यपदेशार्हः, तथा स्वनिवृत्तिरपि सकलसुखोच्छेदकत्वादनिष्टैवेति मृत्युशब्दव्यपदेशार्हैव । तथा च "तमेव विदित्वाति मृत्युमेति ॥ (श्वेता० उ० अ० ३ श्रु० ८) इति श्रुत्या मृत्युतरणहेतुत्वेन प्रशस्यमाना ब्रह्मविद्या अहमर्थविनाशहेतुत्वान्मृत्युहेतुरेव स्यात् ।

किं च, मुक्तौ अहमर्थाभावे "ब्रह्मवेद ब्रह्मैव भवति ॥ (मुण्डको० मु० ३ ख० २ श्रु० ९) "सर्वं ह पश्यः पश्यति ॥ (छा० प्रपा० ७ ख० २६ श्रु० २) इति श्रुतिविरोधश्च स्यात्, प्रथमश्रुत्या ब्रह्मवेदितुरहमर्थस्य ब्रह्मभावेन स्थितिः प्रतिपाद्यते । द्वितीयश्रुत्या सर्वद्रष्टृभावेन स्थितिः प्रतिपाद्यते ॥

अद्वैतिनः—अस्माभिर्नाहमर्थो मोक्षशास्त्राधिकारी स्वीक्रियते, किं तु ज्ञप्तिरूप एवात्मा मोक्षशास्त्राधिकारी स्वीक्रियते,

अतो न दोषः ॥

विशिष्टाद्वैतिनः— संवित्स्वरूपस्य श्रोतृत्वमन्तृत्वाद्यसंभवेन तं प्रति श्रवणमननादिकं न विधातुं शक्यम्। त्वन्मते संविद्रूपस्यात्मनो नित्यमुक्तत्वस्वभावत्वात् तस्यापवर्गार्थित्वमपि न संभवति ॥

अद्वैतिनः— संविद्रूपे आत्मनि ज्ञातृत्व दुःखित्वादीनामध्यस्तत्वात् सर्वमिदमुपपद्यते, इति न कश्चिद्दोषः ॥

विशिष्टाद्वैतिनः— ज्ञातृत्वादिप्रकाशस्य भ्रान्तिरूपत्वं नेति पूर्वमेव साधितम्। निर्विशेषसंवित्स्वरूपस्याधिष्ठानस्य कार्त्स्न्येन भाने न भ्रमः, कार्त्स्न्येनाभानेऽपि न भ्रमसंभवः। केनचिदाकारेणभाने केनचिदाकारेणाभाने च निर्विशेषत्वासिद्धिः, अतोऽध्यास एव तदधिष्ठानको न संभवति ॥

अद्वैतिनः— संविद्रूपस्यात्मनोऽपवर्गार्थमेवाहमर्थः स्वविनाशमभिमत्यैव प्रवर्तते ॥

विशिष्टाद्वैतिनः— दृष्टादृष्टरूपप्रयोजनाभावे परार्थं स्वानर्थावहे व्यापारे परमकारुणिकोऽपि न प्रवर्तत इति लोकानुभवसिद्धम्, दृष्टादृष्टप्रयोजनेऽसति संविन्मोक्षार्थं स्वविनाशावहे मोक्षसाधनेऽहमर्थस्य प्रवृत्तिरपि न संभवति। तथाविधा प्रवृत्तिः प्रियतमोज्जीवनार्थं मुण्डोपहारकल्पा।

किं च, यदि अहमर्थोनात्मा, तर्हि अनात्मनिदेहेऽहंबुद्धिः देहात्मभ्रम इति कथं व्यवह्रियते। स हि भवन्मतरीत्या

देहाहंकारभ्रमः, न तु देहात्मभ्रमः। अनेन हि व्यवहारेणाहमर्थस्यैव आत्मत्वं सिध्यति ॥

अद्वैतिनः— अहमिति आत्माहंकारयोस्तादात्म्याध्यासादहं गौर इत्यादि प्रतीतावपि देहेऽहंकाराभेदवत् आत्माभेदोऽपि प्रतीयत इति देहाहंकारभ्रमो देहात्मभ्रमो भवति ॥

विशिष्टाद्वैतिनः— अहंकारात्मभ्रमस्तदधीनो देहात्मभ्रमश्चाद्य यावदसिद्धः।

किं च, अहं जानामीति अहमर्थस्य धर्मितया ज्ञानस्य च तद्धर्मतया प्रतीतेः विरुद्धधर्मवत्तया प्रतीयमानस्य संविद्रूपस्य ज्ञानस्याहमर्थेन देहेन चाभेदभ्रमोऽसंभवी, विरुद्धधर्मवत्तया भानस्य भ्रमप्रतिबन्धकत्वात्। अद्वैतमतरीत्या विचार्यमाणे अद्वैतिनां देहात्मवादनिराकरणप्रयासोऽपि वितथ इत्येव सिध्यति। चार्वाकैर्देहश्चैतन्यमिति यदि स्वीकृतं स्यात्, तह्येव तन्निराकरणं युज्यते। सर्वैरपि देहातिरिक्तात्मवादिभिर्देहस्य चार्वाकाङ्गीकृतस्याहंत्व चेतनत्वादेरेव निराकरणं क्रियते। इदमद्वैतिनां न युज्यते, तैरात्मनोऽहमर्थत्वेनास्वीकृतत्वात्। संविदो देहाद्भेदेऽद्वैतिभिः साध्यमाने चार्वाकैः सिद्धसाधनदोषो दीयेत, इति तान प्रति तत्साधनं न युज्यते।

किं च, अहमर्थस्य अनात्मत्वे आत्मनः प्रत्यगर्थत्वमपि न सिध्येत्। अहं बुद्ध्यैव हि परागर्थात् प्रत्यगर्थो विविच्यते। "युष्मदस्मत्प्रत्ययगोचरयोः" इतिशारीरकशाङ्करभाष्यमपि

अहंबुद्धिविषयस्य प्रत्यगर्थत्वं मत्वा प्रवृत्तम् ॥

अद्वैतिनः— अहं बुद्धिविषयेऽहमर्थे अंशद्वयं वर्तते, तत्र तत्प्रकाश एकः, स एव प्रत्यक् पदार्थः, द्वितीयश्च तदधीन-प्रकाशवानहन्त्वांशः, स परागर्थः। प्रकाशांशतात्पर्येण प्रत्य-गात्मत्वव्यवहार इति न दोषः।

विशिष्टाद्वैतिनः— यथा अहं प्रत्ययविषये प्रत्यक् परागंशद्वयं स्वीक्रियते, तथा अद्वैतिभिरिदं प्रत्ययविषये कश्चित्प्रत्यगंशः कुतो न स्वीक्रियते। यद्युच्येत, इदमहं न भवतीत्युपलम्भविरोधात् इदं प्रत्ययविषये प्रत्यगंशः स्वीकर्तुं न युज्यते इति, तर्हि अहमिदं न भवामीत्यनुभवविरोधात् अहं प्रत्ययविषयेऽपि इदमंशः स्वीकर्तुं न युज्यते ॥

अद्वैतिनः— परोऽन्यस्यात्मानमनुमानात्प्रतिपद्यमानो-ऽयमिति प्रतिपद्यत इति अन्यं प्रति अहमिति प्रतीयमानोऽपि वस्तुनि इदमंशोऽस्तीति स्वीकार्यमेव ॥

विशिष्टाद्वैतिनः— इदं प्रतीतिविषये तत्रैवान्यस्या-त्मनि प्रत्यगंशस्य सिद्धत्वात्, तद्दृष्टान्तेन इदं प्रतीतिविषये घटादावपि कश्चित्प्रत्यगंशः स्वीकार्यः स्यात् ॥

अद्वैतिनः— नात्र अन्यस्यात्मनि इदमंशो वर्तते, एकमेव वस्तु अंशभेदेऽसत्यपि कश्चित्प्रति अहंत्वेन अन्यं प्रति इदन्त्वेन भातीत्येव तत्त्वम् ॥

विशिष्टाद्वैतिनः— तर्ह्येकस्मिन् आत्मनि प्रकाशमाने

एकस्यैव पुत्रत्वेन पितृत्वेन प्रतीतिवत् अयमिति भानमपि प्रसज्येत, यदि अहमिति प्रतीयमाने इदमंशः स्यात् ॥

अद्वैतिनः— एकस्मिन्नहमर्थप्रकाशेऽपि कदाचिदयमहमस्मीति इदमंशो भात्येव ॥

विशिष्टाद्वैतिनः— यथा देवोऽहमित्यादिषु विशेषण विवक्षया देवादिशब्दः प्रयुज्यते, तथा विशेषणविवक्षयाऽयमिति प्रयुज्यते, न तावता निष्कृष्टेऽहमर्थे इदमंशः सिध्यति। निरंश एवाहमर्थोऽहमिति चकास्तीति तत्रेदमंशकल्पनमसाध्वेव ॥

अद्वैतिनः— अहमर्थोऽहंकार इत्यत्राहं शब्दप्रत्यभिज्ञानादहंकाराहमर्थयोरैक्यं सिध्यति। अहंकारः श्रीभगवता "महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ॥ (गी० अ० १३ श्लो० ५) इति क्षेत्रारम्भकद्रव्येषु परिगणितः "निर्ममो निरहंकारः ॥ (गी० अ० २ श्लो० ७१) इति त्याज्यतयाऽप्युपदिष्टः। अतोऽहंकाररूपोऽहमर्थोनात्मा भवितुमर्हति ॥

विशिष्टाद्वैतिनः—तत्र "महाभूतान्यहंकारो बुद्धिः ॥ (गी० अ० १३ श्लो० ५) इति बुद्धिशब्दप्रत्यभिज्ञानेन भवदभिमत संविदोऽपि बुद्धिशब्दवाच्यमहत्तत्त्वरूपतैव स्यादिति तस्या महत्तत्त्वाद्भेदो न सिध्येत्।

अद्वैतिनः— तत्र बुद्धिशब्दो न संविद्वाची, किं तु अध्यवसायाख्यकार्योपकरणत्वाद्बुद्धिशब्दो महत्तत्त्वाख्य

प्रकृति परिणामस्य बोधकः, इति महत्तत्त्वसंविदोर्भेदः सिध्यति॥

विशिष्टाद्वैतिनः— तत्राहंकारशब्दोऽपि नाहमर्थस्य-वाचकः, किं तु अनात्मनि देहे अहमभिमानाख्यकार्यकारण-भूतस्याहंकाराख्यस्य प्रकृतिपरिणामस्य वाचक इति नाहमर्था-हंकारयोरैक्यं सिध्येत्। अनहं भूतं देहादिकमर्थमहंभूतं करोतीति व्युत्पत्त्यनुसारेण 'कृभ्वस्तियोगे संपद्य कर्तरि च्विः॥ (पाणि० व्या० अ० ५ पा० ४ सू० ५०) "अभूततद्भाव इति वक्तव्यम्॥ (वार्तिक०) इत्यभूततद्भाववाचकच्विप्रत्ययमुत्पा-द्याहंकारशब्दस्य व्युत्पादने अनात्मनि आत्मबुद्धेर्हेतुभूतः प्रकृतिपरिणामविशेषोऽहंकारशब्देन प्रतिपादयितुं शक्यते। क्षेत्रान्तर्भाववचनमहंकारबुद्ध्योः समानम्। तत्राहंकारशब्देन अहमर्थस्य ग्रहणे बुद्धिशब्देन संविदपि गृहीता स्यादिति तयोः क्षेत्रान्तर्भावे देहातिरिक्तात्मनोऽसिद्ध्या नैरात्म्यवादः प्रसज्येत। यदि भवता तत्र बुद्धिशब्देन महत्तत्त्वं बोध्यते न संविदिति समाधीयेत, तर्हि अस्माभिरपि अहंकारशब्देनाहंकारतत्त्वं बोध्यते, नत्वहमर्थ इति समाधातुं शक्यत इति समानमेतत्।

"निर्ममो निरहंकारः॥ (गी० अ० २ श्लो० ७१) इत्यत्र गर्वोऽभिमानोऽहंकारः॥ (अमर० कां० १ व० ७ श्लो० २१) इति गर्वपर्यायस्योत्कृष्टजनावमानहेतोरहंकारस्यैव त्याज्यतो-च्यते, नत्वहमर्थस्याहंकारतत्त्वस्य वा त्याज्यतोच्यते, अहमर्थस्यात्मत्वेन दुस्त्यजत्वात्, अहंकारतत्त्वस्य च यावन्मोक्षं दुस्त्यजत्वात्। अहं भावोऽपि स्वरूपेण त्यक्तुं न

शक्यते, त्यागबुद्धावपि तस्यान्वयात्।

किं च, श्रुतिषु अहंभावस्योपादेयत्वमेव प्रतीयते। "अथातोऽहंकारादेश एवाहमेवाधस्तादहमेवोपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतः ॥ (छा० प्रपा० ७ ख० २५ श्रु० १) इति "योऽसावसौ पुरुषः सोऽहमस्मि ॥ (ईशो० श्रु० १६) त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तन्नोऽहं सोऽसौ योऽसौ सोऽहम् ॥ इत्यादिषु।

किं च, "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ (बृ० अ० ४ ब्रा० ४ श्रु० १२) इति श्रुतिर्निष्कृष्टात्मस्वरूपविषयकं ज्ञान-महन्त्वप्रकारकं निर्दिशन्ती अहमर्थस्यानात्मत्वे विरुध्यते। तथा विष्णुपुराणेऽपि,

"आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज।
अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः ॥"

इति श्लोके आत्मनि अहमिति शब्दस्यादोषत्वमर्थाद्-भ्रान्तताऽनापादकत्वम्, आत्मनि अहमितिबुद्धेरभ्रमरूपत्वम्, अनात्मनि देहादौ जायमानाया अहमित्यात्मविज्ञानस्य भ्रान्तिरूपत्वं, तथा देहादावनात्मनि प्रवर्तमानस्य अहमिति शब्दस्य भ्रान्ततापादकत्वं च स्पष्टं वर्ण्यते।

किं च, "अहं विरजा विपाप्मा भूयासम् ॥ (तैत्ति०

प्रपा० १० अनु० ५३ श्रु० १) "ब्रह्मलोकमभिसंभवामि ॥ (छा० प्रपा० ८ ख० १३ श्रु० १) इत्यहमर्थसम्बन्धितया मुक्ति-र्वर्ण्यते। तेन मुक्तावहमर्थ सद्भावः फलति।

किं च, अद्वैतिभिः "साक्षी चेता केवलो निर्गुणश्च ॥ (श्वे० उ० अ० ६ श्रु० ११) इति श्रुत्यनुरोधेनात्मनः साक्षित्वस्य स्वीकारात् "साक्षाद् द्रष्टरि संज्ञायाम् ॥ (पाणि० व्याक० अ० ५ पा० २ सू० ९१) इति सूत्रयता महर्षिपाणिनिना साक्षाद् द्रष्टर्येव साक्षिशब्दवाच्यतायाः प्रतिपादनात् अहमर्थस्यैव द्रष्टृत्वात् तस्यैवात्मत्वं फलति। अन्या मीमांसयाऽहमर्थ एवात्मा न तु तद्धर्मभूता संविदिति सिद्धम् ॥

## ॥ अस्मदाचार्यस्तुतिः ॥

श्रीवत्सवंशकलशोदधिपूर्णचन्द्रं<br>
श्रीकृष्णसूरिपदपङ्कजभृङ्गराजम्।<br>
श्रीरङ्गवेङ्कटगुरूत्तमलब्धबोधं<br>
भक्त्या भजामि गुरुवर्यमनन्तसूरिम् ॥१॥

इति श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्तप्रवर्तकाचार्य<br>
श्रीमत्परमहंसपरिव्राजकाचार्य सत्संप्रदायाचार्य<br>
जगद्गुरुभगवदनन्तपादीय श्रीमद्विष्वक्-<br>
सेनाचार्य त्रिदण्डिस्वामिना प्रणीता<br>
"आत्ममीमांसा" समाप्ता।

पुस्तकप्राप्तिस्थानम्—

(१) श्री रामानुजस्वामी
कोसलेश सदन, कटरा मुहल्ला
केकईघाट, अयोध्या
जिला फैजाबाद (उत्तर प्रदेश)

●

(२) श्रीमान् बाबू रामाश्रय सिंह 'सिसोदिया'
मु० आञ्छा,
पो० दाउदनगर
जिला गया (बिहार)

मुद्रक—सरस्वती प्रेस, छपरा, १९६०।